| | | |
|---|---|---|
| ग्रन्थको नाम | : | सङ्क्षेपशारीरकसारसङ्ग्रहः |
| सङ्ग्राहक | : | शरत्कुमार भट्टराई |
| सर्वाधिकार | : | © सङ्ग्राहकमा सुरक्षित |
| प्रकाशक | : | श्रीराजर्षिजनकस्मृतिकोष |
| प्रकाशन मिति | : | वि.सं. २०७५ |
| प्रकाशित सङ्ख्या | : | ३०० |
| मूल्य | : | रु. २००।– |
| कम्प्युटर सेटिङ्ग | : | श्रीखड्गप्रसाद खनाल |
| मुद्रक | : | एलायन्स प्रिन्टर्स एण्ड मिडिया हाउस प्रा.लि. |
| ISBN | : | 978-9937-0-5492-8 |

# समर्पणम्

कञ्चित् शारीर सङ्क्षेपात् कञ्चिच्च सारसङ्ग्रहात् ।
सारं सारं समुद्धृत्य ग्रन्थोऽयं सुविनिर्मितः ॥

मम किञ्चित्क्वचिन्नास्ति प्राप्तं गुरुप्रसादतः ।
सङ्ग्रहस्यार्पणं कुर्वे मुनिं सरस्वतीं प्रति ॥

# शुभाशंसा

– स्वामिरमणनन्दगिरिः
महेश सन्न्यास आश्रम
देवघाटधाम, तनहूँ

विचारार्थकाद् मान्धातोः सनि प्रत्यये निष्पन्नः पूजितविचारवाची मीमांसाशब्दो वेदार्थविचारकशास्त्रे रूढः। तत्र धर्मब्रह्मप्रतिपादकमपौरुषेयं वाक्यं वेद इत्यतोवेदार्थविचारकशास्त्रस्यापि भागद्वयं प्रसिद्धं धर्ममीमांसा ब्रह्ममीमांसा चेति। धर्मप्रतिपादने ब्रह्मप्रतिपादने च वेदा एव प्रमाणं न तु लौकिकमिन्द्रियं तेषां बहिर्विषयग्राहित्वात् परिच्छिन्नत्वाच्च। जीवानामिन्द्रियाणि स्वभावत एव परिच्छिन्नानि सन्ति। कालपरिच्छिन्नं वस्तुपरिच्छिन्नमेवार्थं ग्रहीतुं शक्नुवन्ति। ब्रह्मादिस्तम्बपर्यन्तं सर्वं जगद् येन व्यवस्थाप्यते धार्यते च तादृशं धर्मतत्त्वं कथं गृह्णीयुरिन्द्रियाणि। ब्रह्मतत्त्वञ्च तस्मादपि विभु त्रिविधपरिच्छेदशून्यमित्यतो लौकिकैः प्रमाणत्वेन गृह्यमाणानामिन्द्रियाणां धर्मे ब्रह्मणि चाक्षमत्वं स्पष्टमेव। धर्मज्ञानं विना तदनुष्ठानासम्भवेन जीवानां नरकादिदुःखावाप्तिरवश्यम्भाविनी। ब्रह्मतत्त्वज्ञानं विना च तेषां महामोहमये संसृतिचक्रे भ्रान्तिरवश्यम्भाविनी। अतो भगवतो वासुदेवस्य ज्ञान-कलांशो दयालुर्बादरायणो वेदार्थविचारपूर्वकं धर्मब्रह्मतत्त्वनिर्णयाय तदर्थकशास्त्रसंग्रथनाय चप्रववृते। स्वशिष्यं जैमिनिमादिश्य धर्ममीमांसाशास्त्रं विरचयामास। स्वयञ्च ब्रह्ममीमांसासूत्रं रचयाम्बभूव।

ब्रह्मसूत्रस्य शारीरकमीमांसाशास्त्रमित्यपि नामान्तरमामनन्ति मनीषिणः। कुत्सितं शरीरं - शरीरकम्, तत्र निवसतीति शारीरको जीवः। तस्य मीमांसा - पूज्यविचारः। इत्थं विनाशशीले जराव्या-

ध्यादिदोषदूषिते कुत्सिते शरीरेऽन्तर्यामितया मनोबुद्ध्यादिसाक्षित्वेन प्रकाशमानोऽविनाशी आत्मैव शारीरकपदार्थः । आत्मतत्त्वकप्रतिपादकश्रुतीनां तात्पर्यनिर्धारणपरत्वाद् ब्रह्मसूत्राणां शारीरकमीमांसासूत्रमिति नामान्तरं समुचितमेव । ब्रह्मसूत्रे समन्वयाविरोधसाधनफलाख्याश्चत्वारोऽध्यायाः प्रसिद्धाः । तत्र प्रथमे समन्वयाध्याये स्पष्टब्रह्मलिङ्गकानामस्पष्टब्रह्मलिङ्गकानाञ्च श्रुतीनामद्वितीये ब्रह्मणि समन्वयो निरूपितः । उपनिषदामद्वितीयब्रह्मपरत्वे विरुध्यमानानां सांख्यतार्किकादीनां मतानि खण्डयित्वा लोकसिद्धद्वैतानुवादकानां भेदश्रुतीनां सांख्यादिश्रुतीनाञ्चाभेदश्रुतिभिर्विरोधः परिहृतः । तृतीये वैराग्यादिसाधनानि निरूपितानि । चतुर्थे च सगुणब्रह्मविद उत्तरायणमार्गेणोत्क्रान्तिः, निर्गुणब्रह्मविदश्च जीवनमुक्तिरित्यादयो विषयाः प्रपञ्चिताः । इत्थं सर्वार्थप्रतिपादकत्वात् शारीरकमीमांसासूत्रमाकरग्रन्थरूपेणाधीयते ।

बादरायणीयसूत्रेषु भगवत्पादशङ्कराचार्यविरचितं भाष्यमतीव गम्भीरम् । तस्माद्ग्लायमानानां मध्यमबुद्धीनां जिज्ञासूनामुपकाराय वार्तिककार-सुरेश्वराचार्यशिष्येण सर्वज्ञात्ममुनिना छन्दोबद्धेषु सरसपद्येषु शारीरकभाष्यस्य सङ्क्षेपशारीरकग्रन्थो व्यरचि । विवरणप्रस्थानानुगाम्ययं ग्रन्थो जटिलेष्वपि विषयेषु सरलशैल्या तत्त्वं बोधयति । यथा वेदान्तसम्प्रदायेऽविद्याश्रयोब्रह्म जीवो वेति विषये नैकविधानि मतान्तराणि सन्ति । वाचस्पतिमिश्रा अविद्याश्रयो जीवो विषयश्च ब्रह्मेति व्याचख्युः । एतस्मिन् अतुष्यन्तो विवरणानुयायिनः प्राहुः- अविद्याया आश्रयो विषयश्च ब्रह्मैवान्यथान्योन्याश्रयदोषप्रसङ्गात् । आश्रयं जीवं विना तदाश्रिताया अविद्याया असिद्धेरविद्यां विना च तन्मूलकस्य जीवभावस्यासिद्धेः । अतोऽविद्याकल्पितो जीवोऽ-विद्याश्रयो न भवतीति प्रतिपादयन्नाह सर्वज्ञात्ममुनिः –

आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः ॥ इति ॥

इत्थं जटिलानां दार्शनिकविषयाणां सरलश्लोकेषु प्रतिपादनं सर्वज्ञात्ममुनेर्वैशिष्ट्यम् । वेदान्तरहस्यज्ञानाय संक्षेपशारीरकाध्ययनं नितरामावश्यकम् । वेदान्तसम्प्रदाये गन्थस्यास्य महन्महत्त्वमवलोक्य वेदान्तविचारपरायणैर्विद्वद्भिः शरत्कुमारभट्टराईमहाभागैर्ग्रन्थस्यास्य संक्षिप्तं सारभूतञ्च सङ्ग्रहणं सुरभारतीगिरा सुधीनां समक्षं समुपस्थापितं विलोक्य मनःप्रसादजं सन्तोषसुखमनुभवामि । वेदान्त-विचारलेखनाभ्यवसायिनः खल्वेते यूने वयसि राज्यप्रशासनकर्मसु व्याक्षिप्तचित्ता अपि वार्धक्ये चित्तवृत्तीः संक्षिप्य, परमात्मतत्त्व-विचारसरोवरेनिक्षिप्यप्रक्षीणकल्मषाः सन्तोऽक्षीणंशास्त्राध्ययनसुखम नुभवन्तः स्वमायुः क्षपयन्तीति अक्षय्या कीर्तिपताका खल्वेषाम् । सर्वे शास्त्रज्ञा विद्वांस एवमेव शास्त्रार्थविचारलेखनादिभिः समाजशिक्षणे यदि प्रवर्तेरन् तर्हि शास्त्रतत्त्वावबोधो नातिकठिनः स्याल्लौकिकानाम् ।

राजर्षिजनकस्मृतिकोषसंस्थापनेनाद्वैतवेदान्तसेवायां समर्पितानां शरत्कुमारभट्टराईमहाभागानां शास्त्रनिष्ठां दर्शं दर्शं मुदान्वितैरस्माभिः सर्वविद्याप्रवर्तको विद्येश्वरः प्रार्थ्यते यत् - सर्वेषां वेदान्ताध्ययननिष्ठानां हृदिब्रह्माद्वैततत्त्वं निरन्तरं परिस्फुरतु । अन्ते च संक्षेपशारीरकसार-संग्रहनामको ग्रन्थः शीघ्रं प्रकाशितः जिज्ञासूनुपकुर्यादिति शुभमाशंसमानो विरमामि ।

# शुभसम्मतिः

– डा. गुरुप्रसाद सुवेदी

असारेऽस्मिन्संसारे प्रतिक्षणं शतशः सहस्रशो वा जना जायन्ते म्रियन्ते च। जातस्य मृत्युर्मृतस्य पुनर्जनिरिति सततमावर्तते जनिमृतिचक्रम्। तत्र विरला एव जना भगवत्कृपया जन्मान्तरानुष्ठितसुकृतपरिपाकवशा-द्विरज्यन्ते विषयभोगात्। उपासन्ते सद्गुरून्। सच्छास्त्रोक्तसत्कर्मानुष्ठानेन च क्षालितान्तर्मलास्ते सम्प्रवर्तन्ते श्रेयःसाधने । तानेवाधिकारिणो जनान्संसारसागरादुद्धर्तुं करुणावरुणालयो भगवान् सद्गुरुरूपेणाव-तीर्योपनिषदर्थनिगूढमात्मतत्त्वमुपदिशति । बोधयति च स्वात्मस्वरूपं परमेश्वरत्त्वम्। विधत्ते चात्मसमं तम्। एवं भगवदनुग्रहेणैव जीवानामुद्धारो नान्यथेति तदनुग्रहयोग्यतासम्पादनायैवाग्रहोऽस्माकम् । स एव भगवा-न्लोकानुग्रहाय पुरा द्वापरे व्यासरूपेणावततार । वितस्तार च वेदान् । विभज्य वेदाँश्चतुर्धा तदर्थोपबृंहणायेतिहासपुराणादिग्रन्थान्जग्रन्थ।

एवमपि जनिमृतिचक्रान्नैव मोक्ष इति मुमुक्षूणां हितायोपनि-षद्वचनरूपकुसुमानि सङ्कलय्य तन्मालां विरचयितुकाम इव प्रणिनाय ब्रह्मसूत्राख्यमध्यायचतुष्टयसमन्वितं ग्रन्थम् । सोऽयं ब्रह्मसूत्राख्यो वेदान्तग्रन्थो ब्रह्मतत्त्वसूचको वेदान्तकुसुमग्रथनार्थत्वादल्पाक्षरमसन्दिग्ध-मित्यादिलक्षणलक्षितत्त्वाच्च सूत्ररूपः। तत्र चतुर्ष्वध्यायेषु प्रथमेऽध्याये परस्परं विरुद्धवत् प्रतीयमानानां श्रुतिवचनानां समन्वयोऽद्वितीये ब्रह्मणि कथमिति प्रत्यपीपदत् व्यासः। द्वितीये चाध्याये श्रुतिवचनानां विरोधपरिहार इत्यविरोधाध्यायस्य सार्थक्यम् । तृतीये साधनानां तुरीये च फलस्य प्रतिपादनमिति साधनाध्यायस्य फलाध्यायस्य चाभिधानसाफल्यम्।

परं सूत्रात्मकेनानेन मन्दबुद्धयः कथं बुद्ध्येरन् ग्रन्थतात्पर्यमित्याकलय्य साक्षाच्छङ्करावतार आद्यजगद्गुरुर्भगवान् शङ्कराचार्यः शारीरकमी-मांसाख्यं भाष्यग्रन्थं व्यरीरचत् । तेन सूत्रात्मकश्रुतितात्पर्यावबोधने

साफल्यमवाप्तमेव। परमलसा अल्पधिषणाश्च जनाः श्रीमच्छङ्करप्रणीत-शारीरकमीमांसाभाष्याम्भोनिधिनवनीतं सहसा कथं प्राप्नुयुरिति धिया सर्वज्ञात्ममुनिः संक्षेपशारीरकमिति शाङ्करभाष्यवार्त्तिकात्मकं ग्रन्थरत्नं प्रणिनाय । सुललितैश्चत्वारिंशदधिकद्वादशशतश्लोकैर्विलसते काव्यात्मकेऽस्मिन् ग्रन्थे ब्रह्मसूत्रवत् चत्वार एवाध्यायाः त एव विषयाः विलसन्ति । ग्रन्थस्यास्य मधुसूदनसरस्वतीमहोदयेन सारसङ्ग्रहनामकः टीकाग्रन्थो निर्मितः । एवमेव रामतीर्थस्य अन्वयप्रकाशिका टीका, नृसिंहाश्रमस्य तत्त्वबोधिनी, पुरुषोत्तमस्य च सुबोधिनीति टीकाग्रन्थाः सुप्रसिद्धाः सन्ति। एवमन्ये टीकाग्रन्था ग्रन्थस्यास्य वैशिष्ट्यं प्रदर्शयन्ति।

अत्रत्या केचन इमे विषया मननीयाः वर्तन्ते । दृश्यमिदं जगन्नामरूपात्मकं वर्तते। परमापाततो विचारिते नामरूपे त्वरितं तिरस्कृते भवतः। सर्वमिदं जगद् वस्तुतो ब्रह्मरूपम्। श्रुतिर्ब्रूते - सर्वंखल्विदंब्रह्म, नेह नानास्ति किञ्चनेति । नामरूपात्मकमपि पुरो दृश्यमानं प्रपञ्चं यत उत्पन्नम्, यस्मिन् प्रतिष्ठितम्, यत्र च लीयमानं वर्तते तदेव पारमार्थिकं वस्तु। किन्तदिति विचिकित्सायां श्रुतिर्ब्रूते - ब्रह्मैवेदं सर्वमिति। न केवलं पुरो दृश्यमानमिदम्पदाभिधेयं वस्तुजातम् । किन्तु तद्भिन्नमिव प्रतीयमानमहंपदवाच्यमपि ब्रह्मैवेति श्रुतिसारसर्वस्वभूतमहावाक्यार्थ-विचारनिष्कर्षः। वस्तुतो दृश्यमिदं द्रष्टरि एवारोपितमज्ञेन। तेनैव बन्धः। बन्धोत्पत्तेर्मूलमज्ञानम्। तन्निवृत्तिरेव मोक्षः। तदुक्तं ग्रन्थकारेण–

अल्पं रूपं बन्धनं प्रत्यगात्मा, बद्धोऽनेन स्वच्छचैतन्यमूर्तिः।
स्वात्माज्ञानं कारणं बन्धनेऽस्य, स्वात्मज्ञानात्तन्निवृत्तिश्च मुक्तिः।

– संक्षेपशारीरकम् १।५०

प्रकृतग्रन्थे मङ्गलाचरणव्याजेनैव प्रारम्भे तत्त्वंपदार्थविवेकपुरस्सरं तयोरैक्यं सूचितम्। ततश्च प्रत्यगात्मतत्वसाक्षत्कारः कृतिसाध्यो न वेति विचार्य तत्र विचारार्हतैव नास्तीत्याशङ्क्य स्वतःसिद्धस्याप्यज्ञानादसिद्धतैवेत्युक्तम् । श्रवणादज्ञाननिवृत्तावपि प्रतिबन्धकवशात्तद्भानं भवतीति भर्क्षुदृष्टान्तद्वारा प्रतिबन्धकनिवृत्यर्थं विचारस्यावश्यकता

प्रोक्ता। तस्याज्ञानस्य परिजिहीर्षायां विचारस्यौचित्यं प्रदर्श्य मृषाभूतस्या-प्यज्ञानस्य निराकरणमपेक्षितमित्युक्तम्। एवम् अध्यासविचारः, आत्म-तत्त्वस्य मीमांसितव्यत्वमीमांसा, आत्मदर्शने विधिविचारः, गुरूपपसत्तिः, श्रद्धामाहात्म्यम्, तत्त्वंपदार्थविचारपुरस्सरं महावाक्यस्याखण्डार्थविचारः, निरतिशयसुखास्पदस्यात्मतत्त्वस्यानुभूतिवैशिष्ट्यञ्च प्रथमे प्रकरणे प्रतिपादितम्। तत्र करस्थितवलयस्य विस्मरणादलब्धस्य स्मरणानन्तरं लाभ इव स्वतः सिद्धस्याप्यज्ञानवशादसिद्धस्यात्मनो ज्ञानमात्रेण लाभ इति कनकवलयदृष्टान्तेन विषयोयं प्रदर्शितः।

यथा-

करमुष्टिनिविष्टमुत्तमंकनकंप्रस्मरणादलब्धवत्।<br>
प्रतिभातितदाप्तवाक्यतःप्रतिपत्त्यालभतेयथाजनः॥ इति।

द्वितीयेऽध्याये अद्वितीये ब्रह्मणि वेदान्तवाक्यानां समन्वयः कथमिति विचार्य तत्र प्रत्यक्षादिविरोधो युक्त्या परिहृतोऽस्ति। एवं प्रत्यक्षादि-बाह्यप्रमाणैर्वेद्यानामनात्मपदार्थानामतात्विकत्वं प्रतिपाद्य श्रुतो तत्त्वावेद-कत्वं साधितम्। सृष्टिवैशिष्ट्यञ्च विवर्तवादेन समाहितम्। संसारस्य केवलं ज्ञाननिवर्त्यत्वम्, बन्धमोक्षव्यवस्थापनम्, बन्धमोक्षव्यवस्थापक-शास्त्राणां प्रामाण्यञ्च प्रतिपाद्य कल्पितशास्त्रेष्वपि तत्त्वबोधकत्वं प्रदर्शितमस्ति। तृतीयेऽध्याये ज्ञानसाधनानि निरूप्यापवर्गसाधनरूपेण तत्त्वमस्यादि वाक्यविचारस्य महत्त्वं प्रदर्शितम्। यद्यपि यज्ञादिसाधनान्यपि चित्तशुद्धिहेतुरूपेण प्रदर्शितानि। परं ज्ञानार्थं संन्यासस्यैव महत्त्वं प्रदर्शितम्। यथा –

यज्ञादि-क्षपित-समस्त-कल्मषाणां पुत्रादित्रयगतसङ्गवर्जितानाम्।<br>
संशुद्धे पदयुगलार्थतत्त्वमार्गे प्रायेणोद्भवति हि जन्मनीह विद्या॥

– सं. शा. ३।३४८

नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता च।<br>
शीलं स्थितिर्दण्डनिधानमार्जवं ततस्ततश्चोपरमः क्रियाभ्यः॥

– सं. शा. ३।३६३

किं ते धनेन किमु बन्धुभिरेव वा ते किं ते दारैर्ब्राह्मण यो मरिष्यति।
आत्मानमन्विच्छ गुहां प्रविष्टं पितामहस्ते क गतः पिता च॥
– सङ्क्षेपशारीरकम् ३।३६५

तुरीयेऽध्याये मुक्तिरूपस्य बोधफलस्य विचारः प्रस्तुतः । तत्र ज्ञानकर्मसमुच्चयनिरसनपूर्वकं ब्रह्मविद्यायाः महत्त्वं प्रदर्शितमस्ति । तत्र च सगुणब्रह्मविद्यायाः फलं ब्रह्मलोकावाप्तिः । निर्गुणब्रह्माद्वैतसाक्षात्कारे तु न तस्य गमनागमनं न च लोकान्तरावाप्तिः । जीवन्मुक्तावस्थायामवस्थितिर्निर्गुणब्रह्मविचारफलम् । वस्तुतः ज्ञानोत्पत्यन्तरं क्रियमाणसञ्चित-योर्विनाशः । परं यावच्छरीरं प्रारब्धमात्रमवशिष्यते । एवमात्मलाभात् परमलाभ इति ब्रह्माद्वैतबोधादद्वैतबाधकभेदबुद्धिनिरासश्चेति विद्यामहिमा प्रदर्शितः । यथा –

अद्वैतबाधकमभून् मम यद् द्वितीयमद्वैतमस्य बत बाधकमेव जातम्।
मोहाद् द्वितीयमपबाधकमस्य विद्यासामर्थ्यतोऽद्वयनिबर्हणमद्वितीयम्॥
– सङ्क्षेपशारीरकम् ४।५६

साम्प्रतं तस्यास्य संक्षेपशारीरकाख्यस्य ग्रन्थस्यापि सारसङ्ग्रहभूतोऽयं ग्रन्थः श्रीमता वेदान्तविद्याम्भोनिधिनिगूढरत्नान्वेषणनिपुणेन विशुद्ध-धिषणाधवलितेन विदुषा शरत्कुमारभट्टराईमहाभागेन सङ्कलितः सम्पादि-तश्चेति परममोदावहोऽयं विषयः समेषामपि शेमुषीजुषां कृते। प्रकृतेऽस्मिन् संक्षेपशारीरकसारसङ्ग्रहाख्ये ग्रन्थे महत्वपूर्णाः श्लोकाः सङ्गृहीताः सन्ति । तान्येतानि विविधच्छन्दोबद्धानि सुललितपदावलीविलसितानि मनोहराणि पद्यानि सहसा समाकर्षन्ति सहृदयानां हृदयानि । प्रकृतग्रन्थे भट्टराईमहाभागेन सुललितसुरगिरा मधुसूदनस्य पूर्वपक्षस्य व्याख्यानमपि प्रदर्शितम् । एतेन ग्रन्थतात्पर्यबोधः सहसा भवेदिति इति मे मतिः । वस्तुतोऽयं ग्रन्थः श्रीमच्छारीरकार्थप्रकटनपटुताशाली वर्तत इति नाविदितं समेषां शेमुषीजुषाम् । ईदृशं ग्रन्थरत्नं निर्माय भट्टराईमहोदयेन

महाँल्लोकोपकारो विहित इति मे प्रतिभाति। इतः पूर्वमपि श्रीमता शरद्-कुमारभट्टराईमहोदयेनाद्वैतवेदान्तविचारसम्बद्धाः बहवो ग्रन्थाः विरचिताः। एतेषां स्वाध्यायाध्यवसायः सुतरां प्रशंसनीयोऽनुकरणीयश्च। ब्रह्माभ्यासो नाम सततं ब्रह्मानुचिन्तनं तत्सम्बद्धग्रन्थाध्यायनं तद्विचारश्च । यदुक्तमभियुक्तैः पञ्चदशीग्रन्थे –

तच्चिन्तनं तत्कथनं तत्परस्परबोधनम्।
एतदेकपरत्वञ्च ब्रह्माभ्यासं विदुर्बुधाः ॥

– *लघुवाक्यवृत्तिः १७*

एतत्सर्वं भट्टराईमहाभागस्य जीवने दरीदृश्यते । प्रायः साम्प्रतिका अधीतवेदान्ता अपि जनाश्चरमेवयसि व्यर्थविषयचिन्तनेन यापयन्ति दिवसान् । विस्मरन्ति ब्रह्मतत्त्वानुचिन्तनकृत्यम् । परमेते शरद्कुमार-भट्टराईमहाभागाः साम्प्रतिके वार्धक्येऽपि वयसि सर्वदापि ब्रह्माभ्यासे निमग्नाः दरीदृश्यन्ते । राजर्षिजनकस्मृतिकोषसंस्थास्थापनपुरस्सरं जनकाख्यब्रह्मविद्याविचारपरकपत्रिका-प्रकाशनं चैतेन विहितम् । एवं ब्रह्मसाक्षात्कारः, उपनिषत्सारः, ब्रह्मसूत्रसारः, अध्यासस्तथा चतुःसूत्री, वेदान्तपरिभाषासारः, परमसत्य, अध्यासः, अद्वैतसिद्धिः १-२ खण्ड, ब्रह्मविद्या, अजातवादः, पराविद्या, अपरोक्षाऽनुभूतिः, औपनिषदः पुरुषः, अवधूतगीता, अष्टावक्रगीता, ऋते ज्ञानान्न मुक्तिः, सङ्क्षेपशारीरकसारसङ्ग्रहः इत्यादिविविधग्रन्थप्रकाशनव्याजेन चैते सर्वदा ब्रह्मविचारपरकमेव कार्यमनुतिष्ठन्ति। एतेषां कृत्यमिदं भूयोभूयः सभाजयन्, अन्येऽपि मुमुक्षवो भट्टराईमहोदयस्य कृत्यमिममनुकुर्युरिति विभावयन् ग्रन्थस्यास्याध्ययनेन मुमुक्षवो मोक्षलाभं प्राप्नुयुरित्याशंसमानः ग्रन्थस्यास्य प्रकाशनाय स्वकीयां शुभसम्मतिं प्रकटय्य विरमामि।

❀

# अतीव प्रशंसनीयोऽयं ग्रन्थः

– प्रा. भवानीप्रसादः खतिवडा
पूर्ववेदवेदान्तविभागाध्यक्षः वाल्मीकिविद्यापीठस्य

## १. विषयप्रवेशः

सर्वदर्शनेषु दर्शनीयतमस्याद्वैतवेदान्तदर्शनस्य श्रीमच्छङ्कराचार्य-प्रणीतस्य ब्रह्मसूत्रशाङ्करभाष्यस्य विषयवस्तु समधिकृत्य श्रीसर्वज्ञात्म-मुनिना विरचितस्य सङ्क्षेपशारीरकग्रन्थस्य सारसङ्ग्रहः स्थालीपुलाकन्या-येन मयावलोकितः । एष सारसङ्ग्रहः खलु नेपालसर्वकारस्य पूर्वसचिवम-होदयेन प्रथितसाहित्यकारेण कविवरेण, अद्वैतवेदान्तदर्शननिष्णातेन "श्रीशरत्कुमारभट्टराई" इति नामधेयेन विदुषा कृतो वर्तते । अस्मिन् सङ्-क्षेपशारीरकसारसङ्ग्रहे श्रीमच्छारीरकशास्त्रस्य तात्पर्यविषयीभूते मुमुक्षु-भिर्जिज्ञास्ये निर्विशेषे ब्रह्मणि बोधनीये प्रासङ्गिकमुमुक्ष्वजिज्ञास्यसवि-शेषब्रह्मोपासनावाक्यानेकविचारविक्षिप्ततया दुःखबोधतामाकलय्य तद्वि-क्षेपपरित्यागेन मुमुक्षुभिर्जिज्ञास्य निर्विशेषब्रह्म शास्त्रतात्पर्यविषयी-भूतस्यानायासेन मुमुक्षुबोधाय सङ्क्षेपशारीरकस्य बृहत्कायग्रन्थस्य पूर्व-पक्षसहितं सारतममात्मतत्त्वं महता परिश्रमेण भट्टराईमहाभागेनोपस्थापितं वर्तते ।

## २. आत्मैव ब्रह्मेति गीयते

वस्तुतस्तु शाङ्करवेदान्तदर्शनस्य प्रतिपाद्यविषयः खलु जीवब्रह्मै-क्यशुद्धात्मैव विद्यते । परमात्मनः किं स्वरूपम् ? आत्मेति पदार्थः कः ? इति जिज्ञासायां सत्यामुच्यते यत्-

यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ।
यच्चास्य सन्ततोभावस्तस्मादात्मेति गीयते ॥

यो जाग्रदवस्थायां विश्वरूपेणेन्द्रियद्वारा बाह्यान् स्थूलविषयान् भुङ्क्ते । यश्च स्वप्ने तैजसरूपेण मनोद्वारा समस्तान् वासनामयान्

सूक्ष्मविषयान् गृह्णाति । सुषुप्तावपि सकलपदार्थान् स्वस्मिन् संविलाप्य स्वानन्दमनुभवति स एवात्मेत्युच्यते । 'तमेव भान्तमनुभाति सर्वम्' 'विज्ञातारमरे केन विजानीयात्' 'यत्साक्षादपरोक्षाद्ब्रह्म' इत्यादिश्रुतिभिर्व्यष्टिसमष्टिस्थूलसूक्ष्मकारणात्मकस्याखिलस्यैव प्रपञ्चस्य भानात् प्रागेव भासमानस्याखिलनिगमादि सच्छास्त्रतात्पर्यगोचरस्यावेद्यत्वे सत्यपरोक्षत्वेन स्वप्रकाशकत्वं यत्साक्षादपरोक्षत्वं विद्यते स आत्मा । बृहत्वाद् वृंहणत्वाद्वात्मैव ब्रह्मेति गीयते । आत्मा ब्रह्म चाद्वयमेवाखण्डचैतन्यस्वरूपमेकमेव तत्त्वम् । यथा ब्रह्मात्मनोरभेदस्तथैव जीवब्रह्मणोरपि । अत एव श्रुतिरुद्गिरति यद् 'जीवो ब्रह्मैव नापरः' इति ।

तच्च ब्रह्म द्विविधं वर्तते- सगुणं निर्गुणञ्च । निर्गुणं ब्रह्म प्रमाणागम्यम् । स्वप्रकाशे ब्रह्मणि प्रमाणापेक्षा नास्ति । उपनिषदोऽपि वस्तुतः स्वप्रकाशात्मनि गतिं न लभन्ते । यतो हि श्रुतयोऽतद्व्यावृत्तिमुखेन कथञ्चिदेव ब्रह्म बोधयन्ति । अस्मिन् विषये सर्वज्ञात्ममुनयो भणन्ति यद्-

अज्ञातमर्थमवबोधयदेव मानं
तच्च प्रकाशकरणक्षममित्यभिज्ञाः ।
न प्रत्यगात्मविषयादपरस्य तच्च
मानस्य संभवति कस्यचिदत्र युक्त्या ॥२।८

एवं प्रमाणमखिलं बहिरर्थनिष्ठं
वेदान्तवाक्यमपहाय यथोक्तहेतोः ।
न प्रत्यगात्मविषयं श्रुतिरप्युवाच
स्पष्टं पराञ्चिवचसाऽर्थमिमं यथोक्तम् ॥२।१३

लक्षणप्रमाणाभ्यां वस्तुसिद्धिर्भवतीति युक्तिमाश्रित्य ब्रह्मणो लक्षणं द्विधा विहितं स्वरूपलक्षणं तटस्थलक्षणञ्चेति ।

## ३. स्वरूपलक्षणम्

स्वरूपं सल्लक्षणं स्वरूपलक्षणम् । तच्च यथा 'सत्यं ज्ञानमनन्तं ब्रह्म' । अत्रत्यानीमानि सत्यज्ञानानन्तादीनि लक्षणानि सर्वदा ब्रह्मण्य-

वस्थितानि । तेन तानि ब्रह्मणः स्वलक्षणानि निगद्यन्ते । यावल्लक्ष-कालावस्थायित्वे सति इतरव्यावर्तकत्वं स्वरूपलक्षणत्वम् । लक्षणमिदं खलु स्वरूपमात्रे पर्यवस्यति । भगवता शङ्कराचार्येण चोक्तं यत् सदादयो न तस्य गुणा ब्रह्मस्वरूपमेव तदिति ।

पञ्चपादिकाकारवचनञ्चास्ति यद् आनन्दो विषयानुभवो नित्यत्वञ्चेति सन्ति धर्माः । अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्त इति । इत्थं सत्ता, चित्ता तथानन्दरूपता च ब्रह्मणः स्वरूपलक्षणमिति सिद्धम् ।

## ४. तटस्थलक्षणम्

यावल्लक्ष्यकालमवस्थायित्वे सति यद् व्यावर्तकत्वं तटस्थलक्षणत्वम् । एतत्तु कादाचित्कं भवति । यतो ह्यस्मिन् विषये श्रुतिरपि वदति यत्- 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिविशन्ति तदेव हि विजिज्ञासस्व तद् ब्रह्म' इति श्रुतिर्ब्रह्मणो जगज्जन्मादिहेतुत्वं प्रतिपादयति । अत एव सर्वज्ञं कर्तुमकर्तुमन्यथाकर्तुं च ब्रह्मैव जगतः कारणम् । एतेन जगज्जन्मादिकारणत्वं ब्रह्मणस्तटस्थलक्षणं पर्यवसन्नम् । एतावता सिद्धं भवति यदद्वैतवेदान्ते खलु ब्रह्मणो जगज्जन्मादिकारणत्वं स्वीकृत्य तटस्थ लक्षणेन ब्रह्मणो निरूपणं विहितम् । वस्तुतस्तु सगुणनिर्गुणयोराधारः सोपाधिक निरुपाधिकत्वमेव विषयेऽस्मिन् खलु सर्वज्ञात्ममुनयो वदन्ति यत् -

तान्येव कार्यकरणानि बहुप्रकारं
भेदञ्च बिभ्रति भवानपि तत्र लग्नः ।
भेदेन भाति जलमात्रनिविष्टमूर्ति-
र्मार्तण्डमण्डलवदन्वयमन्तरेण ।।३।६६

## ५. ग्रन्थसारः

अनया रीत्या वेदान्तदर्शने प्रतिपादितस्य ब्रह्मणः साक्षात्प्रतिपादनं विधिमुखेन नैव कृतमस्ति । अपि तु निषेधमुखेन विहितं वर्तते । अत्र कारणमस्ति यदौपनिषदं ब्रह्मावाङ्मनसगोचरं विद्यते । ये ये पदार्थाः

कार्यरूपेण दृग्गोचरतां यान्ति तेषां क्रमशो निषेधानन्तरं ब्रह्मैवावशिष्टं भवति। अतोऽद्वैतवेदान्तसम्प्रदाये विधिमुखप्रतिपादनापेक्षया निषेधमुखेन प्रतिपादनं गरीयो मन्यते। सत्यज्ञानादीनि विधिमुखप्रतिपादकप्रमाणानि च असत्यादिव्यावृत्तिद्वारैव ब्रह्मणि फलन्तीति वेदान्तमतम् । उपनिषदामियं सुस्पष्टा घोषणास्ति यद् ब्रह्मतत्त्वे वाण्या बुद्धेश्च प्रवेशो नास्ति । यथा 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' 'यन्मनसा न मनुते' इत्याद्युक्तः ।

एवञ्च बृहदारण्यकोपनिषदि 'स एव नेति नेत्यात्मा' 'अगृह्यो न हि गृह्यते' इत्यादिनिषेधमुखेनैव प्रतिपादितम् । अत्र प्रथमेन नेतिपदेन मायाकार्यं भूतभौतिकपदार्थजातं निषिद्धं चेद् द्वितीयेन नेतिपदेन प्रपञ्चकारणभूताया मायाया अपि निषेधो विहितो विद्यते । नहि किमपि शास्त्रं वाच्यवाचकभावेन ब्रह्मतत्त्वमिदन्तया निर्धारयति, अपि तु निषेधमुखाश्रयेणैव ज्ञापयति । तथा च स्मर्यते 'अतद्व्यावृत्त्या यं चकितमभिधत्ते श्रुतिरपि' इति । तदेवं निषेधमुखाश्रयणादनात्मन्यात्मभ्रान्तिनिवृत्तौ सत्यां शुद्धान्तःकरणे स्वतः सिद्धं शुद्धं ब्रह्म प्रत्यगात्मरूपेण बिम्बितं भवतीत्येव सङ्क्षेपशारीरकस्य सारः। अत्र खलु निषेधस्य रहस्यं वैशिष्ट्यञ्च वर्तते यद् यदि विधिमुखेन ब्रह्मणः स्वरूपं निश्चयीक्रियते चेद् ब्रह्मणः स्वप्रकाशकत्वे हानिर्भवति। यतो हि ब्रह्मणोऽपेक्षया शब्दो महत्तरो भवति। अतो ब्रह्मणः स्वप्रकाशत्वं प्रतिपादयितुं निषेधमुखेनोपनिषत्सु ब्रह्मस्वरूपं प्रतिपादितमिति रहस्यम्।

एतादृशीं रहस्यविद्यां पूर्वं सम्यगधीत्य परोपकृतये धृतव्रतेन भट्टराईकुलदीपकेन शरत्कुमारभट्टराईमहोदयेन सङ्क्षेपशारीरिकसारसङ्ग्रहं विधाय प्रकाशितमिदं पुस्तकमतीव पठनीयं वर्तते। आशास्महे च जिज्ञासुजनोपकृतये विरचितो निगूढग्रन्थियुतोऽयं ग्रन्थः श्रीललिताम्बाचन्द्रमौलीश्वरयोरकम्पानुकम्पया सर्वत्र प्रकाशतामिति।

# ब्रह्म सत्यं जगन्मिथ्या

– उपप्राध्यापक नेत्रप्रसाद अधिकारी
वाल्मीकिविद्यापीठम् ।

महापुरुषाणामियं विशेषता यत् स्वल्पैः शब्दैरेव ग्रन्थानां सारं वक्तुं ते शक्नुवन्ति । भगवान् शङ्करः पार्वत्याः सेवया हृष्टः सन् कथयति –

श्लोकार्धेन प्रवक्ष्यामि यदुक्तं ग्रन्थकोटिभिः ।
ब्रह्म सत्यं जगनिमथ्या जीवो ब्रह्मैव नापरः ॥

सर्वज्ञात्ममुनिरपि तादृश एवास्तिकनास्तिकदर्शनानां ज्ञाता व्याख्याता रसिको विद्वानवर्तत इति न कापि शङ्का । तेन काव्यात्मकशैल्या न्यायप्रस्थाननाम्ना प्रख्यातस्य ब्रह्मसूत्रस्य शाङ्कर-भाष्यस्य सङ्क्षेपशारीरकं नाम प्रकरणग्रन्थो व्यरचि । अस्य ग्रन्थस्य सरलतां सरसतां सुललितविषयगाम्भीर्यं च विलोक्य सर्वै-र्मुक्तकण्ठेनायंप्रशंस्यते । दर्शनेषु श्रेष्ठतममद्वैतवेदान्तमपि सरलतया वक्तुं न सर्वे समर्था भवन्ति । अस्य मुनेः क्षमतां विलोक्य सर्वे विद्वांसः चकिताः सन्ति । श्रीसर्वज्ञात्माचार्यो मलिनचित्तानां विक्षि-प्तचेतसां मुमुक्षुजनानां निर्विशेषे ब्रह्मणि दुर्बोधतां विचार्य शास्त्रतात्प-र्यभूतं निर्विशेषं ब्रह्म मुमुक्षुणांबोधयितुं करुणया ग्रन्थमिमं रचितवान् ।

ब्रह्म नित्यसुखं विशोकं चास्ति । अत एव सदा प्रशान्तमभयं च वर्तते । भेदशून्यत्वादभयं कथ्यते । श्रुतिश्च "द्वितीयाद् वै भयं भवति ।" ब्रह्म शुद्धं ज्ञानैकरसं विषयकरणसङ्गशून्यमस्ति । वृत्यात्मकज्ञानस्य तु नीलपीताद्याकारेण चक्षुरादिकरणभेदेन च भेदो दृश्येत । वृत्तेरेव विषयकरणोपरागरूपो मलो न तु ज्ञानस्येति ज्ञात्रा सह भेदोऽपि नास्ति । ज्ञातुः स्वरूपमेव न ततो भिन्नम् । शब्दबोध्यत्वमत्र नास्ति । "तं त्वौप-निषदं पुरुषं पृच्छामि" अत्र श्रुतिवाक्ये शब्दबोधत्वप्रतीतिर्न वास्तवा यतस्तद्बोधे शब्दस्य व्यापारो न, आरोपितनिवृतावेव शब्दाः प्रवर्तन्ते । यत्र बहुकारकसाध्यं चतुर्विधं क्रियाफलं च नास्ति । १) उत्पाद्यम् २)

आप्यम् ३) विकार्यम् ४) संस्कार्यं चेति चत्वारि क्रियाफलानि। घटं करोति कुलाल इत्यत्र उत्पाद्यं क्रियाफलम्। चक्षुषा रूपं पश्यतीत्यत्र आप्यम्। सोमं सुनोति सोमपा इत्यत्र विकार्यम्। संस्कारश्च त्रिविधः, तत्र प्राक्तनपुण्यातिशयजन्यः सुखविशेष आद्यः। द्वितीयो मलापाकरणरूपः। तृतीयो गुणाधानरूपः। राज्यं प्राप्नोति धर्मिष्ठ इत्याद्यं संस्कार्यम्। रजको वस्त्रं छालयतीति द्वितीयं संस्कार्यम्। वस्त्रं रञ्जयतीति तृतीयं संस्कार्यम्। इमं विषयं श्रीसर्वज्ञात्ममुनिः सरलश्लोकेन प्रस्तौति यथा–

न स्वाध्यायवदाप्यता न च पुनस्त्रेताग्निवज्जन्यता,
न ब्रीह्यादिवदस्य संस्कृतियुजा नो सोमवद्विक्रिया।
पाठाधानजलोक्षणाभिषवणैः कूटस्थरूपं हि तत्,
ब्रह्मापास्त विकारजन्ममरणं निःश्रेयसं साधनैः॥

– सङ्क्षेपशारीरकम् १।३०६

इन्द्रियैर्ज्ञानांशाभिव्यक्तिरिव क्रियाभिरानन्दांशाभिव्यक्तिमात्रं क्रियते न उत्पत्यादिकम्। प्रकाशस्याग्रेऽन्धकार इव माया ब्रह्मणोऽग्रे स्थातुं न शक्नोति। दूरतोऽपसरति। एवंभूते ब्रह्मणि नियमितमनसां कृतार्थानां न किमपि कृत्यमस्ति। तस्मिन् मनःस्थिरीकृतानां यतीनां साधनस्यापि नावश्यकतानुपयोगात्। श्रीमद्भागवते महापुराणे सृष्टिकर्ता ब्रह्मा स्वपुत्रं नारदमुपदिशति यत् –

शश्वत्प्रशान्तमभयं प्रतिबोधमात्रं
शुद्धं समं सदसतः परमात्मतत्त्वम्।
शब्दो न यत्र पुरुकारकवान्क्रियार्थो
माया परैत्यभिमुखे च विलज्जमाना॥

– भागवत २।७।४७॥

तद्वै पदं भगवतः परमस्य पुंसो
ब्रह्मेति यद्विदुरजस्रसुखं विशोकम्।
सध्र्यङ् नियम्य यतयो यमकर्तहेतिं
जह्युःस्वराडिव निपानखनित्रमिन्द्रः॥

– भागवत २।७।४८

वेदा अपौरुषेयाः । पौरुषवाक्येषु भ्रमप्रमदादिपुरुषदोषा भवन्ति । तदभावादपौरुषेये वेदे स्वतः प्रामाण्यम् । महतोभूतस्य परमात्मनो निश्वसिता वेदा निर्दोषाः अप्रामाण्यकारणरहिताः सन्ति । श्रुतयस्तात्पर्यवृत्या ब्रह्मण्येव पर्यवस्यन्ति । न तु साक्षाद् वदन्ति । सगुणस्य गुणानन्त्यान्निर्गुणस्य च अगोचरत्वादिदमेतावदिति कथयितुं न शक्येत ।

मुख्या लक्षणा गुणभेदेन त्रिधा शब्दस्य बोधानुकूलव्यापारः । अनिर्देश्ये निर्गुणे कार्यकारणाभ्यां परस्मिन्नसङ्गे ब्रह्मणि त्रिधा शब्दप्रवृत्तिर्न संभवति । श्रुतयः सगुणमेव ब्रह्मतत्त्वं प्रतिपादयन्ति । "यः सर्वज्ञः स सर्ववित् यस्य ज्ञानमयं तपः" "सर्वस्य वशी सर्वस्येशानः" "यः पृथिव्यां तिष्ठन् पृथिव्या आन्तरः" "सोऽकामयत बहु स्याम्" "सत्यं ज्ञानमनन्तं ब्रह्म" इत्याद्याः श्रुतयो गुणैरनभिभूतं सर्वज्ञं सर्वशक्तिं सर्वेश्वरं सर्वनियन्तारं सर्वोपास्यं सर्वकर्मफलप्रदातारं समस्तकल्याणगुणनिलयं सच्चिदानन्दं भगवन्तं प्रतिपादयन्ति परं पर्यवसानं तु निर्गुणे एव भवति । जीवानां संसारनिवृत्तये जीवस्य तथाभूतं स्वरूपं महावाक्यानि बोधयन्ति । जीव-ब्रह्मणोः ऐक्यबोधकं वाक्यं महावाक्यम् । जहदजहत्स्वार्थलक्षणया सोऽयं देवदत्त इतिवद्विरुद्धांशत्यागेनानुगतचिदंशेनैकार्थेन सामानाधिकरण्येन महावाक्यानि निर्गुणे ब्रह्मणि पर्यवस्यन्ति । "अन्यदेव तद्विदितादथो अविदितादधि" "अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्" "अस्थूलमनणु" इत्यादिप्रकारेण साक्षादुपाधिनिषेधेन तत्पदार्थशोधन-वाक्यानां निर्गुण एव पर्यवसानम् । उपासनादिवाक्यानि तु क्रियार्थ-प्रवृत्तसृष्ट्याद्यवलम्बनेन ज्ञानसाधनविधानेन निर्गुणपरत्वानि सन्ति । "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" इत्यत्र जैमिनिना वेदस्य क्रियापरत्वमभिहितम् । "एकमेवाद्वितीयं ब्रह्म" "विज्ञानमानन्दं ब्रह्म" इत्येवं तद्विपरीतात्मप्रतिपादनाद् अद्वितीयपरमानन्दरूपस्य कर्माङ्गत्वं न युज्यते ।

कर्तृत्वाभिमानं फलामिसन्धिं च परित्यज्य परमेश्वरप्रीतये वैदिक-कर्मानुष्ठानेनान्तःकरणं निर्मलं भवति । एवंविधाः शुद्धान्तःकरणा भगवन्तं भजन्ति । तेषां भगवति रतिस्तदितरे विरतिर्जायते । अविक्षिप्तमानसास्ते

संसारं तरन्ति । तदुक्तम् –

भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥

अन्ये तु न भगवन्तं प्राप्नुवन्ति, न चेह सुखं लभन्ते, केवलं कुयोनीरेव प्राप्नुवन्ति । यथा –

यदि न समुद्धरन्ति यतयो हृदिकामजटा
दुरधिगमोऽसतां हृति गतोऽस्मृतकण्ठमणिः ।
असुतृपयोगिनामुभयतोऽप्यसुखं भगव-
न्ननपगतान्तकादनधिरूढपदाद्भवतः ॥

उपरि सङ्केतिता विषया सर्वज्ञात्ममुनिना स्वस्य प्रकरणग्रन्थेऽस्मिन् स्पष्टतया वर्णिताः सन्ति । मतान्तरमपि स्थापयित्वा स्वसिद्धान्तप्रतिपादने स निपुणो दरीदृश्यते । यथा-

आरम्भवादः कणभक्षपक्षः
संघातवादस्तु भदन्तपक्षः ।
साङ्ख्यादिपक्षः परिणामवादो
वेदान्तपक्षस्तु विवर्तवादः ॥

सर्वदर्शनकुशलमतेस्तस्य ग्रन्थे श्रद्धाधनेन मधुसूदनसरस्वती-महाभागेनान्यासां टीकानां सारं गृहीत्वा सादरं प्रौढिः सारगर्भिताटीका लिखिता । अस्याः श्लोकोद्धरणपूर्वं लिखितभूमिकासहितान् महत्त्व-पूर्णान् श्लोकान् सङ्गृह्य निर्मितमिदं पुस्तकं मुमुक्षुणां बहूपयोगि भविष्यतीत्यहं मन्ये। "सङ्क्षेपशारीरकसारसङ्ग्रहः" इति ग्रन्थसम्पादनकर्तुः 'शरत्कुमारभट्टराई' महाभागस्यायं महान् प्रयत्नः प्रशंसार्हो वर्तते । यतोहि पुनः पुनराद्योपान्तग्रन्थानुसन्धानेनैव तस्य सारं गृहीतुं शक्यते । इत्यलं किं बहुलेखनेन । ॐ तत्सत् ।

# अत्र कश्चिद् वाग्विशेषः

पूर्वस्मात्समयादेव अद्वैतवेदान्तस्य जिज्ञासुर्विद्यार्थ्यहम् आसम् सर्वकारस्य सेवाकाले तथा अन्यस्मिन्कालेऽपि अध्ययनलेखनानुवादब्रह्माभ्यासान् करोमिस्म ।

तस्मिन् क्रमे सङ्क्षेपशारीरकग्रन्थाद् उद्धृतमेकं श्लोकमहं पठितवान्[१] । ततः पूर्वं ग्रन्थस्यास्य प्रणेतुराचार्यस्य सर्वज्ञात्ममुनेः स्पष्टरूपेण परिचयोऽपि नासीत् । उपर्युक्तः श्लोको हि मामत्र प्रवृत्तये प्रैरिरत् ।

आचार्यस्य सर्वज्ञात्ममुनेर्जन्म खीष्टाब्दस्य नवमशताब्द्यामभूत् । तत्र भवान् देवेश्वरस्य अर्थात् सुरेश्वराचार्यस्य शिष्य आसीदिति तत्र ग्रन्थे स्वयमेव लिखति ।[२]

सर्वज्ञात्ममुनेरपरं नाम नित्यबोधाचार्य आसीत् । स शृङ्गेरीपीठस्य नवमः पीठाधीशोऽभूत् । स्वस्य गुरोर्नाम तेन देवेश्वर इति लिखितः । देवेश्वर[३] एव सुरेशवराचार्यनाम्ना प्रसिद्धः । स आद्यजगद्गुरोः श्रीशङ्कराचार्यस्य प्रमुखाणां चतुर्ण्णां शिष्याणां मध्य एक आसीत् । वार्तिककारोऽपि स एव । तस्य कालोऽष्टमी शताब्दीतिकथ्यते ।

आचार्येण शङ्कराचार्येण प्रणीतस्य ब्रह्मसूत्रस्य प्रसन्नगुणयुक्तस्य गम्भीरार्थस्य भाष्यस्य[४] सरलः सरसः काव्यात्मकः प्रकरणग्रन्थोऽस्ति सङ्क्षेपशारीरकम् ।

---

१. आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला ।
पूर्वसिद्धतमसो हि पश्चिमो नाऽऽश्रयो भवति नापि गोचरः ॥
– सङ्क्षेपशारीरकम् १।३१९

२. यदीयसम्पर्कमवाप्य केवलं वयं कृतार्था निरवद्यकीर्तयः ।
जगत्सु ते तारितशिष्यपङ्क्तयो जयन्ति देवेश्वरपादरेणवः ॥
– सङ्क्षेपशारीरकम् १।८

३. श्रीदेवेश्वरपादपङ्कजरजःसम्पर्कपूताशयः
सर्वज्ञात्मगिराङ्कितो मुनिवरः सङ्क्षेपशारीरकम् ।
– सङ्क्षेपशारीरकम् ४।६२

४. सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुसारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥

[5]ब्रह्मसूत्रे समन्वयः अविरोधः, साधनम्, फलञ्चेति चत्वारो-ऽध्यायाःसन्ति । तदनुरूपमेव शाङ्करभाष्यो वर्तते । न्यायप्रस्थाननामेदं भाष्यं ज्ञातुं काठिन्यमनुभूयते ।

जिज्ञासूनामध्येतॄणां सरलतयावबोधयितुं शङ्कराचार्यस्य प्रथमः शिष्य, पद्मपादाचार्यः अध्यासभाष्येण सह अथातो ब्रह्मजिज्ञासादिचतुःसूत्रीणां टीकारूपेण पञ्चपादिका इति प्रसिद्धं ग्रन्थं व्यरचयत् । तस्य टीकारूपेणाचार्यः प्रकाशात्मयतिः प्रसिद्धं विवरणं लिखितवान् । अद्वैतवेदान्ते तद्विवरणप्रस्थानमिति नाम्ना प्रसिद्धम् ।

ब्रह्मसूत्र इव सङ्क्षेपशारीरकग्रन्थेऽपि चत्वारोऽध्यायाः सन्ति । प्रथमेऽध्याये ५६३ श्लोकाः, द्वितीयेऽध्याये २४८ श्लोकाः, तृतीयोऽध्याये ३६६ श्लोकास्तथा चतुर्थेऽध्याये ६३ श्लोकाः सन्ति । सरसः सरलो मधुरः कर्णप्रियोऽयं ग्रन्थः सहजतया ज्ञातुं शक्यते । श्रोत्रियस्य ब्रह्मनिष्ठस्य गुरोरुपदेशादेव श्रवणमनननिदिध्यासनाद्यन्तरङ्गसाधनेन महता कालेन वेदान्तसिद्धान्तं यत्किञ्चिज्ज्ञातुं शक्यते । ग्रन्थस्यास्याध्ययनात्तु वसन्ततिलकामन्दाक्रान्तादिभिर्वृत्तैरौपनिषदं ज्ञानमपि सम्यक्तया सरलतया व्याख्यातुं शक्यत इति प्रतिभाति । वेदान्तस्य गुह्यं तात्पर्यं द्रुतबिलम्वितछन्दसोपादिशति यत्–

बहु निगद्य किमत्र वदाम्यहं,
शृणुत सङ्ग्रहमद्वयशासने ।
सकलवाङ्मनसातिगता चितिः,
सकलवाङ्मनसव्यवहारभाक् ॥

– सङ्क्षेपशारीरकम् १।३२१

दर्शनीयतमस्याद्वैतवेदान्तदर्शनस्य स्वीकृतन्यायप्रस्थानस्य ब्रह्म-

---

५. शास्त्रं ब्रह्मविचाराख्यमध्यायाः स्युश्चतुर्विधाः ।
समन्वयाविरोधौ द्वौ साधनञ्च फलं तथा ॥

सूत्रस्य शाङ्करभाष्यस्य सारभूतोऽयं [६]प्रकरणग्रन्थः[७]। केचिदाचार्या इमं शाङ्करभाष्यस्य वार्तिकमपि कथयन्ति परन्तु ग्रन्थकृत्तु प्रकरणग्रन्थत्वेन प्रतिजानीते। एतेनस्मिन् विषये विमर्शस्य नावश्यकता।

सर्वज्ञात्ममुनिना सरलभाषायां लिखितमपि अद्वैत-वेदान्तदर्शनं स्वयमेव गहनत्वेन तत्र प्रयुक्ताः कतिपयाः शब्दाः द्व्यर्थकाः क्लिष्टा दुर्गमाश्च सन्ति। स्पष्टार्थं विद्वद्भिर्नाना टीका लिखिता। तासां मध्ये रामतीर्थस्वामिकृता अन्वयार्थप्रकाशिका टीका, नृसिंहाश्रमकृता तत्त्वबोधिनी टीका, अग्निचितः पुरुषोत्तमस्य सुबोधिनी टीका, मधुसूदनसरस्वतीस्वामिनः सारसङ्ग्रहटीका प्रसिद्धा सन्ति। मधुसूदनसरस्वतीकृता सारसङ्ग्रहटीका पाण्डित्यपूर्णत्वेनानु-सन्धानमूलकत्वेन तर्कपूर्णत्वेन चातिग्राह्या।

आस्तिकनास्तिकदर्शनाधारेण स्वयं पूर्वपक्षमुपस्थाप्य उत्तरपक्ष-रूपेण सङ्क्षेपशारीरकग्रन्थस्य श्लोकानां टीकायामद्वैतवेदान्तस्य गूढदा-र्शनिकसिद्धान्तान् उपस्थापयितुं टीकाकारः सरस्वतीमहाभागः पूर्णतया सफलो दरीदृश्यते।

न केवलमद्वैतवेदान्तस्य अपि तु समग्रस्य पूर्वीयदर्शनस्य ज्ञाता श्रीमधुसूदनसरस्वती अद्वितीयो विद्वान् आसीत्। रामचरितमानसस्य रचयितुर्गोस्वामी श्रीतुलसीदासस्तस्य समकालिक आमनन्ति विद्वांसः। अनयोर्द्वयोर्मित्रताप्यासीत्। तदा तुलसीदासेन अवधीभाषायां रचितो रामायणः संस्कृतविद्वद्भ्यो न रोचते स्म। अस्मिन् विषये श्रीतुलसीदासः श्रीमधुसूदनसरस्वतीमहाभागाय पत्रं लिलेख यथा –

---

६. शास्त्रैकदेशसम्बन्धं शास्त्रकार्यान्तरे स्थितम्।
आहुः प्रकरणं नाम ग्रन्थभेदं विपश्चितः॥

७. शक्तो गुरोश्चरणयोर्निकटे निवासात्, नारायणस्मरणतश्च निरन्तराय।
शारीरकार्थविषयावगतिप्रधानं, सङ्क्षेपतः प्रकरणं करवाणि हृष्यन्॥
– सङ्क्षेपशारीरकम् १।१०

हरिहरयश सुरनरगिरा वरणहिँ सन्त सुजान।
हाँडी हाटक चारु रुचि राँधे स्वाद समान।

अर्थात् स्वर्णस्य मृतिकाया वा भाण्डे पक्वस्य भोजनस्य स्वादे यथा नभिन्नता तथैव भगवतो यशोगाने संस्कृतभाषायां भाषान्तरे वा नापकर्षः।

श्रीतुलसीदासं प्रशंसन् श्रीमधुसूदनसरस्वती तस्योत्तरं लिखितवान् यथा –

परमानन्दपत्रोऽयं जङ्गमस्तुलसीतरुः।
कवितामञ्जरी तस्य रामभ्रमरभूषिता॥

१५९८ ख्रीस्ताब्दे राज्ञोऽकबरस्य समये अबुलफल्ज इत्यनेन निर्मिते आइने अकवरी इत्यत्रान्यैर्विद्वद्भिः सह मधुसूदनसरस्वत्या नामापि उल्लिखितं दृश्यते। अकबरस्यार्थमन्त्रिणा टोडरमलेन सह तस्य विशेषः सम्बन्ध आसीदिति श्रूयते। तस्य विद्वत्वेन प्रभावितो राजाकवरो वाराणसीतः दिल्लीनगरे सम्मानार्थं तमाहूतवान्। तस्य सम्मान एका विशाला विद्वत्सभा समायोजिता। विदुषा मधुसूदनसरस्वतीमहाभागेन सभायाः सभापतित्वं गृहीतम्। तस्य विद्वत्तया नतमस्तकैः सर्वैः सभासद्भिः सर्वसम्मत्या सोऽभिनन्दितः। अभिनन्दनपत्रे लिखितं यत्–

वेत्तिपारं सरस्वत्या मधुसूदनसरस्वती।
मधुसूदनसरस्वत्याः पारं वेत्ति सरस्वती॥

२०१६ तः २०२१ वैक्रमाब्दपर्यन्तमहं श्रोत्रियाद् ब्रह्मनिष्ठाद् प्राध्यापकात् श्रीगोपालनिधिगुरोः सकाशादद्वैतवेदान्तं पठितवान्। ब्रह्मज्ञं नम्रं मृदुभाषिणं गुरुं प्रत्यहं चिरर्णी अस्मि।

अद्वैतवेदान्तपठनार्थं मम प्रेरयिता तथा निर्देशकश्चासीत् प्राचार्यो विद्वद्वरः श्रीपद्मप्रसादभट्टराई तं प्रत्यहमृणी अस्मि। चिरकाल-

पर्यन्तं गुरुद्वययोः[8] ऋणादहं न विमुञ्चामि । केवलं श्रद्धानतोऽहं कृतज्ञतां व्याहरामि । चिरकालान्नैरन्तर्येण श्रवणमनननिदिध्यासनब्रह्माभ्यासान् कुर्वाणोऽपि कतिपयान् गुह्यान् महत्वपूर्णान् विषयानहं न जानामिस्म । विशेषतः स्वाध्यायः, महावाक्यम्, मुक्तेः साक्षात् साधनम् ब्रह्म-साक्षात्कारः महावाक्यपदानुष्यूताद्वैतवेदान्तगतप्रातिपदिकार्थः, इत्यादयो विषयाः सङ्क्षेपशारीरकग्रन्थस्याध्ययनेनैव स्पष्टीकृताः ।

ब्रह्मसाक्षात्कार, परमसत्य, ब्रह्मविद्या, पराविद्या, औपनिषद पुरुष, ऋते ज्ञानान्न मुक्तिः, एतेषु निबन्धग्रन्थेषु मया ज्ञातविषया व्यक्तीकृताः । सारांशतः अहं सर्वज्ञात्ममुनिंप्रति सश्रद्धं पुष्पाञ्जलिमर्पयामि ।

**ग्रन्थे अस्मिन् सङ्क्षेपशारीरके स्थितानां विषयाणां कतिपयानि वैशिष्ट्यानि प्रदर्श्यन्ते–**

(क) ब्रह्मसाक्षात्कारस्य साक्षात् साधनं स्ववेदशाखाया महावाक्यस्य[9] श्रवणं श्रोत्रियाद् ब्रह्मनिष्ठाद् गुरुतः कुर्यात् ।

(ख) जगत उपादानकारणं जीवेश्वरप्रधानादिविलक्षणं[10] शुद्धं ब्रह्म वर्तते ।

(ग) [11]कार्योपाधिरयंजीवः कारणोपाधिरीश्वरः अनेनाविद्याया अन्तःकरण-रूपकार्ये प्रतिबिम्बितं चेतनमीश्वरः ।

---

८. बहवो गुरवो ह्यासन् तेषां पद्मस्तथा निधिः ।
साक्षान् मे द्वौ गुरू आस्तां ताभ्यां नमामि सर्वशः ॥

९. साक्षान्महावचनमेव विमुक्तिहेतुः । – सङ्क्षेपशारीरकम् ३।२९५

१०. साभासमेतदुपजीव्य चिदद्वितीया संसारकारणमिति प्रवदन्ति धीराः ।
साभासमेतदिति संसृतिकारणत्वे द्वारम्परम्भवति कारणता दृशस्तु ॥
– सङ्क्षेपशारीरकम् १।३२३

११. मायोपाधेरद्वयस्येश्वरत्वं कार्योपाधेर्जीवता च प्रतीचः ।
मिथ्यैव स्याद् बन्धुजीवप्रसूनसम्पर्कोत्था रक्ततेवाभ्रकादेः ॥
– सङ्क्षेपशारीरकम् ३।१४८

(घ) [१२]स्वाध्याय कः ? धर्मोऽर्थाद् विधिः कः ? स्ववेदशाखा का ? वेदान्तभूमिः का ? कस्य वेदस्य महावाक्यं श्रवणीयम् ? गुरुः कीदृशः ? ब्रह्मसाक्षात्कारस्य हेतुः कः ? इत्यादिप्रश्नानामुत्तरं सङ्क्षेपशारीरकारेण स्पष्टरूपेण लिखितम् ।

(ङ) [१३]स्वाप्निकपदार्थस्याधिष्ठानं स्वतोऽवच्छिन्नचैतन्यमस्ति न त्वहङ्कारावच्छिन्नं चैतन्यमिति ।

(च) [१४]तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन इति बृहदारण्यकोपनिषत्श्रुतिवाक्ये केचित् वेदानुवचनपदं ब्रह्मचारिणः, यज्ञेन दानेन पदे गृहस्थस्य, तपसानाशकेन पदे वानप्रस्थस्य साधनानि कथयन्ति । परन्तु स्वस्य गुरोः सुरेश्वराचार्यस्य मतानुयायी सर्वज्ञात्ममुनिः नित्यानित्यकर्मणा-मुपयोगो विविदिषार्थं भवतीति कथयति ।

(छ) अद्वैतवेदान्ते अविद्यालेशस्य महत्त्वं वर्वर्ति । केचिद् विद्वांसो मायाया विक्षेपशक्तिं कथयन्ति । तत्त्वज्ञानेन अज्ञानस्यावरणशक्तेः एव नाशो न विक्षेपशक्तेर्यतो हि तथा जीवन्मुक्तस्य प्रारब्धकर्म सुरक्षितं स्यात् । केचिद् अविद्यायाः संस्कार एव अविधालेश इति कथयन्ति । अन्ये दग्धपटवद् अविद्याया नष्टानुवृतिर्वाबा-

---

१२. स्वाध्यायधर्मपठितं निजवेदशाखा वेदान्तभूमिगतमादरपालितञ्च ।
सन्न्यासिना परदृशा गुरुणोपदिष्टं साक्षान्महावचनमेव विमुक्तिहेतुः ।
– सङ्क्षेपशारीरकम् ३।२९५

१३. अपरोक्षरूपविषयभ्रमधीरपरोक्षमास्पदमपेक्ष्य भवेत् ।
मनसः स्वतो नयनतो यदि वा स्वप्नभ्रमादिषु तथाप्रथितेः ॥
– सङ्क्षेपशारीरकम् १।४१

१४. एकाहाहीनसत्रद्वयविहिततानेककर्मानुभाव-
ध्वस्तस्वान्तोपरोधाः कथमपि पुरुषाश्चिद्दिदृक्षां लभन्ते ।
यज्ञेनेत्यादिवाक्यं शतपथविहितं कर्मवृन्दं गृहीत्वा,
स्वोत्पत्त्याम्नानसिद्धं पुरुषविविदिषामात्रसाध्ये युनक्ति ॥
– सङ्क्षेपशारीरकम् १।६४

धितानुवृतिरेवाविद्यालेश इति वदन्ति। अविद्यालेशो हि अविद्याया आकारान्तर इति श्रीचित्सुखाचार्यमतम्[१५] । स तु प्रारब्धकर्मद्वारा प्रतिबद्धतत्त्वज्ञानान्निवृत्तः सन् जीवनपर्यन्तं तिष्ठति अनेन ब्रह्मज्ञानिनो सद्योमुक्तिः[१६] सिध्यति।

स्थूलादृश्यसूक्ष्मसृष्टिप्रपञ्चस्य मूलकारणमज्ञानमेकमेव । अज्ञानस्याकारस्तु त्रिधा भवति।

१. प्रपञ्चगतं सत्यत्वं भ्रमस्य हेतुरस्ति।

२. अर्थक्रियासमर्थो वस्तुनः कल्पकोऽस्ति।

३. अपरोक्षप्रतीतेर्विषय आकारस्य कल्पकोऽस्ति।

उपर्युक्ताज्ञानस्य निवृत्तिरद्वैतसत्यत्वस्य निश्चयस्य पश्चाद् भवति। तत्त्वसाक्षात्कारानन्तरं द्वितीयाकारस्य निवृत्तिर्भवति। तृतीयाकारस्तु जीवन्मुक्तस्य जीवनपर्यन्तं तिष्ठति । प्रारब्धकर्मणा सह तस्य निवृतिर्भवति । तदनन्तरं ब्रह्मज्ञानिनः कैवल्यमोक्षो भवतीति श्रीचित्सुखाचार्यस्य श्रुतिसम्मतं[१७] मतं वर्तते।

श्रुतिवाक्यस्य बहुवचनेन मायाया आकारत्रयं द्योत्यते । प्रथमतृतीयाकारौ अविद्यारूपौ तौ जीवस्य व्यष्टिबन्धनं कथ्यते। तस्य निवृत्तिर्ज्ञानेन भवति । द्वितीयाकारो मायानाम समष्टिबन्धनं भक्त्या निर्वर्तते । भक्तिज्ञानयोः समुच्चय एव मोक्षहेतुरस्तीति केचित्

---

१५. अविद्यालेशशब्देन मोहाकारान्तरोक्तितः।
ज्ञानस्य प्रतिबन्धाच्च प्रबलारब्धकर्मभिः ॥
लेशानुवृत्तौ तज्जन्य कर्मादेरनुवृत्तितः।
उत्पन्नात्मावबोधस्य जीवन्मुक्तिः प्रसिध्यति ॥ – तत्त्वप्रदीपिका ४।१०,११

१६. सम्यग्ज्ञानविभावसुः सकलमेवाज्ञानतत्सम्भवं,
सद्यो वस्तुबलप्रवर्त्तनमरुद्व्यापारसन्दीपितः।
निर्लेपेन हि दंदहीति न मनागम्यस्य रूपान्तरं
संसारस्य शिनष्टि तेन विदुषः सद्योविमुक्तिर्ध्रुवा ॥
– सङ्क्षेपशारीरकम् ४।३८

१७. इन्द्रो मायाभिः पुरुरूप इयते। – बृहदारण्यकोपनिषद् २।५।१९

कथयन्ति । सङ्क्षेपशारीरककारमते तु अज्ञानस्य प्रथमाकारकस्याद्वैत-सत्यत्वस्य साक्षात्कारनन्तरं समूलमज्ञानं नश्यति ततो ब्रह्मज्ञानी सद्योमुक्तिं वा कैवल्यमुक्तिं लभते ।

(ज) अविद्यानिवृत्तेः किं स्वरूपम् ? कथयितुं काठिन्यं भवति । सदितिस्वीकारे द्वैतापत्तिः स्याद्यतो निषेधस्तु अभाव एव । न्यायदर्शनानुसारेण अभावस्य प्रतियोगी[१८] भवति । असदिति स्वीकारे ज्ञानसाध्यत्वानिष्पत्तिः स्यात् । सदसद्विलक्षणस्वीकारे अज्ञानस्य सत्ता स्वीकारणीया भवति । अद्वैतवेदान्ते अस्य नामानिर्वचनीयं वर्तते । तदेव जडस्य जगतः कारणम्[१९] । तदेवाज्ञानम् । तदेव बन्धनम् । तस्य निवृतिं विना न मोक्षः सम्भवेत् । अस्मिन् विषये नासदीयसूक्ते वर्णनं प्राप्यते । गौडपादाचार्य-बौद्धदार्शनिकनागार्जुनादिविद्वद्भिः स्वग्रन्थे मतानि प्रस्तुतानि सन्ति । अस्मिन् ग्रन्थे सर्वज्ञात्ममुनिना[२०] सत्, असत्, सदसत् तथा सदसद् विलक्षण पञ्चमप्रकारोऽन्यथानुपपत्याधारे स्वीकृतः ।

जीवः स्वाज्ञानकल्पिताज्ञानेन[२१] बन्धनात् संसारचक्रे भ्रमति । जगज्जीवेश्वरत्वस्य भेदं सृष्ट्वा स्वात्मानं परिच्छिन्नं मत्वा आविद्यिक-त्रिपुट्यां जीवति इहामुत्र च क्लिश्यति ।

---

१८ यस्य अभाव स प्रतियोगी ।

१९. अज्ञानमेवास्य हि मूलकारणम् । – रामगीता ९

२०. सदसत्सदसद्विकल्पितप्रतिपक्षैकवपुर्निवर्त्तनम् ।
तमसोऽभ्युपगम्यतेऽन्यथाऽनुपपत्त्यापतनैकेहेतुतः ।
अथवा चितिरेव केवला वचनोत्पादितबुद्धिवर्त्मना ।
परमात्मतमोनिवृत्तिगीर्विषयत्वं समुपैत्युपाधिना ॥
– सङ्क्षेपशारीरकम् ४।१२,१५

२१. स्वाज्ञानकल्पितजगत्परमेश्वरत्वजीवत्वभेदकलुषीकृतभूमभावा ।
स्वाभाविकस्वमहिमस्थितिरस्तमोहा प्रत्यक्चितिर्विजयते भुवनैकयोनिः ॥
– सङ्क्षेपशारीरकम् १।२

[22]अज्ञानमेवाविद्या माया वा कथ्यते। अत्र जीज्ञासा जागर्ति यद् अज्ञानस्य क आश्रयः ? को विषयः ? अज्ञानं शुद्धचितिशक्तेर्ब्रह्मण आश्रयं कृत्वा ब्रह्मण एव विषयं करोतीति ग्रन्थकारेण समतान्तरं स्वग्रन्थे स्पष्टं लिखितम्।

संसर्गाध्यासस्वरूपाध्यासतादात्म्याध्यासान्योऽन्याध्यासधर्माध्यास-धर्म्यध्याससोपाधिकाध्यासनिरुपाधिकाध्यासानां मूलकारणमज्ञानमे-वास्तीति सर्वज्ञात्ममुनेर्दृढं मतं वर्तते। अहङ्कारादि परिच्छिनजडदुःरूप-मात्मन्यध्यस्तम् न वास्तविकम्। प्रत्यक्परागंशयोः पारस्परिकोऽध्यासः सम्भवेत्। [23]अस्मिनन्योऽन्याध्यासे अज्ञानमेव निमित्तकारणं भवति।

भाष्यकारस्य भगवत्पादस्य श्रीशङ्कराचार्यस्य प्रशिष्यस्तथा-वार्तिककारस्य श्रीसुरेश्वराचार्यस्य शिष्यः सङ्क्षेपशारीरकस्य रचयिता सम्मानार्ह आचार्यो विद्वद्वरः सर्वज्ञात्ममुनिः सर्वतन्त्रस्वतन्त्रो दार्शनिक आसीदिति ग्रन्थावलोकनेन निश्चपूर्वकं वक्तुं शक्यते। निर्द्वन्द्वो निरहङ्कारः परदृक् सन्यासी स कृतज्ञ आसीदिति तेनैव रचिता[24] गुरुवन्दनैव प्रमाणम्।

श्री १००८ स्वामिरमणानन्दगिरिमहाभागान् प्रति महत्वपूर्णस्य मन्तव्यस्य कृते हृदयतः कृतज्ञतां ज्ञापयामि। एवमेव प्राध्यापका भवानीप्रसादखतिवडामहोदयास्तथा सहप्राध्यापकाः श्रीगुरुप्रसादसुवेदि-महाभागाश्च स्वस्वमन्तव्यस्योपलब्धतायै धन्यवादार्हाः सन्ति।

---

२२. आश्रयत्वविषयत्व भागिनी निर्विभागचितिरेव केवला।
पूर्वसिद्धतमसो हि पश्चिमो नाऽऽश्रयो भवति नापि गोचरः॥
– सङ्क्षेपशारीरकम् १।३१९

२३. अध्यस्तमल्पवपुरस्य न वास्तवं तत्, प्रत्यक्पराग्द्वयमिदं हि परस्परस्मिन्।
अध्यस्ततां प्रति समर्थमबोधमात्रमन्योऽन्यरूपमिथुनीकरणे निमित्तम्॥
– सङ्क्षेपशारीरकम् १।२७

२४. गुरुचरणसरोजसन्निधानादपि वयमस्य गुणैकलेशभाजः।
अपि महति जलार्णवे निमग्नाः सलिलमुपाददते मितं हि मीनाः॥
– सङ्क्षेपशारीरकम् १।९

विदुषा उपप्राध्यापकेन अधिकारिणा श्रीनेत्रप्रसादेन सुष्ठु सम्पादितस्तथा परिमार्जितश्च सङ्क्षेपशारीरकसारसङ्ग्रहग्रन्थोऽयम् । तेनास्य ग्रन्थस्य मन्तव्यश्च लिखितः । अतस्तस्य कृतेरयमकिञ्चनस्तस्मै हृदयतः कृतज्ञतां ज्ञापयति। अस्य ग्रन्थस्य उत्टङ्कणकर्ता तथा कार्यालय-सहायकः श्रीखड्गप्रसादप्रत्यहं धन्यवादं ज्ञापयामि । ॐ ब्रह्मार्पणमस्तु ।

दिनाङ्क : विक्रमाब्दः २०७५
वसन्तपञ्चमी

विद्वद्वशंमतः
शरत्कुमार भट्टराई

❀

# सङ्क्षेपशारीरकसारसङ्ग्रहः

अज्ञानसङ्क्लिप्तविचेतनोऽहं संसारमायापरिवर्धितोऽहम् ।
अज्ञाननाशाय करोमि चाल्पं सङ्क्षेपशरीरकसारसङ्ग्रहम् ॥

## आचार्यसर्वज्ञमुनिं नमामः

सङ्क्षिप्य शारीरकभाष्यमेतत्,
सङ्क्षेपशारीरकमत्र सृष्टम् ।
सङ्गृह्य तत्त्वात्मकतत्त्वमात्रं,
आचार्यसर्वज्ञमुनिं नमामः ॥

(१)

संस्तूय पूर्वं गुरुसूत्रकारं,
पश्चात्प्रणम्य गुरुभाष्यकारम् ।
कृत्वा प्रणामं स्वगुरुं सुरेशं,
सङ्ग्रथ्यते शास्त्रमिदं बुधेन ॥

(२)

सङ्क्षेपशारीरककार आचार्यः सर्वज्ञात्ममुनिः सूत्रभाष्यवार्तिक-कारान् पूर्वक्रमेण स्तौति त्रिभिः श्लोकैः –

तत्र रत्नाकररूपेण भगवन्तं व्यासं सूत्रकारं प्रथमगुरुं स्तौति –

वाग्विस्तरा यस्य बृहत्तरङ्गा,
वेलातटं वस्तुनि तत्त्वबोधः ।
रत्नानि तर्कप्रसरप्रकाराः,
पुनात्वसौ व्यासपयोनिधिर्नः ॥ (१।६)

(३)

सत्सम्प्रदायेन भाष्यकर्तारं शङ्करावतारं

श्रीशङ्कराचार्यं प्रणमति –

वक्तारमासाद्य यमेव नित्या,

सरस्वती स्वार्थसमन्विताऽऽसीत् ।

निरस्तदुस्तर्ककलङ्कपङ्का,

नमामि तं शङ्करमर्चिताङ्घ्रिम् ॥ (१।७)

(४)

इदानीं स्वगुरुं वार्तिककारं श्रसुरेश्वराचार्यं नमस्करोति –

यदीयसम्पर्कमवाप्य केवलं,

वयं कृतार्था निरवद्यकीर्तयः ।

जगत्सु ते तारितशिष्यपङ्क्तयः,

जयन्ति देवेश्वरपादरेणवः ॥ (१।८)

(५)

नानायोनिषु चङ्क्रम्य भुक्त्वा भोगं शुभाशुभम् ।

अवशिष्टेन पुण्येन मनुष्यत्वाय कल्पते ॥

(६)

सम्प्राप्य मानवीं योनिं जगज्जीवौ तथेश्वरम् ।

स्वाज्ञानतो विनिर्माय भूमत्वाच्च्यवते नरः ॥

(७)

यथा मुनिना वर्णितमस्ति –

स्वाज्ञानकल्पितजगत्परमेश्वरत्व –

जीवत्वभेदकलुषीकृतभूमभावा ।

स्वाभाविकस्वमहिमस्थितिरस्तमोहा,

प्रत्यक्चित्तिर्विजयते भुवनैकयोनिः ॥

(८)

इदं शारीरकं शास्त्रं ब्रह्मद्रवपरिप्लुतम् ।

तस्मान्मधुरिमापूर्णमिति मे भाति साम्प्रतम् ॥

(९)

सच्चिदानन्दरूपं हि ब्रह्म यद् सदसत्परम् ।
तदेव ब्रह्म चास्मिन्तु चितिरूपेण भासते ॥
(१०)

मङ्गलाचरणं कृत्वा प्रणम्य सद्गुरुं हरिम् ।
बालानां ब्रह्मबोधाय मुनिना रचितं हि तत् ॥
(११)

प्रपठ्य शाङ्करं भाष्यं विचार्य च पुनः पुनः ।
विभज्याध्यायरूपेण सूत्रभाष्यानुसारतः ॥
(१२)

'सूक्ष्मशारीरकम्' नाम्ना यच्छास्त्रं मुनिना कृतम् ।
दत्वा प्रकरणं नाम चाति सङ्क्षेपतः स्वयम् ॥
(१३)

सूत्रभाष्यञ्च शास्त्रञ्च तथा प्रकरणमेव च ।
लक्षणं दीयते चात्र यद् विद्वद्भिर्विनिश्चितम् ॥
(१४)

स्वल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः ॥
(१५)

सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुसारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥
(१६)

प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन च ।
पुंसा येनोपदिश्येत तच्छ्रास्त्रमभिधीयते ॥
(१७)

शास्त्रैकदेशसम्बन्धः शास्त्रकार्यान्तरे स्थितम् ।
आहुः प्रकरणं नाम ग्रन्थभेदैर्विपश्चितः ॥
(१८)

भवेयुर्गीतिशून्यानि वागादीनीन्द्रियाणि च ।
कथं ज्ञानं भवेत्तस्य ह्यवाङ्मनसगोचरः ॥
(१९)
इत्थं विचार्य चाचार्यः शिष्यबोधाय शारीरे ।
अध्यासनामकं भाष्यं प्रथमं परिकल्पितम् ॥
(२०)
अध्यासं प्रथमं ज्ञात्वा तदनन्तरमेव हि ।
अथातो ब्रह्म जिज्ञासेत्यत्र योग्यो भवेन्नरः ॥
(२१)
विभक्तं ब्रह्मसूत्रं तदध्यायेषु चतुर्षु हि ।
भाष्यं तदनुरूपं हि विभक्तं दरिदृश्यते ॥
(२२)
शास्त्रं ब्रह्मविचाराख्यं चतुरध्यायसंयुतम् ।
समन्वयाविरोधौ द्वौ साधनञ्च फलं तथा ॥
(२३)
ब्रह्मज्ञानंसमुद्दिश्य यच्छास्त्रं मुनिना कृतम् ।
सोऽध्यापयत् स्वशिष्येभ्यो मुमुक्ष्वादिभ्य ऊचिवान् ॥
(२४)
पश्चाद् ऊचे स ज्ञानार्थं जिज्ञासूनां समन्ततः ।
एवं रूपेण तच्छास्त्रं सर्वत्र भासितं क्रमात् ॥
(२५)
विषयो ह्यधिकारी च सम्बन्धश्च प्रयोजनम् ।
अत्रापि वर्णितं चास्ति ह्यनुबन्धश्चतुष्टयम् ॥
(२६)
विषयो ब्रह्मविद्यैव ह्यधिकारी च चोत्तमः ।
ज्ञातृज्ञापकसम्बन्धो मोक्षश्चैव प्रयोजनम् ॥
(२७)

महान्धकारमोहेन ग्रस्तधीरजितेन्द्रियः ।
अज्ञानाच्छन्नमूढोऽहं मायाविक्षिप्तकर्मधीः ॥
(२८)

अहं किञ्चिन्नजानामि तथापि जडहृन्मम ।
ज्ञानीव नाटकं कर्तुमत्यन्तं कुशलं सदा ॥
(२९)

इत्थंभूतस्तथाप्यहं किञ्चिल्लिखितुमुत्सहे ।
कथं पारमवाप्नोमि गमिष्याम्युपहास्यताम् ॥
(३०)

उररीकृत्य तद्भावं पूर्वेऽस्मिन् क्रान्तदर्शिना ।
कविना कालिदासेन रघुवंशे स्फुटीकृतम् ॥
(३१)

मन्दः कवियशः प्रार्थी गमिष्याम्युपहास्यताम् ।
प्रांशुलभ्ये फले लोभादुद्वाहुरिव वामनः ॥
(३२)

नाहंकरोमि सत्सृष्टिमनुवादैव केवलम् ।
पूर्वाचार्यैः कृतं यद् यत् तदेव ह्यनुवादनम् ॥
(३३)

"अथवा कृतवाग्द्वारे वंशेऽस्मिन्पूर्वसूरिभिः ।
मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः ॥"
(३४)

मुमुक्षुरधिकारी स्यात् कथमज्ञो भवेदिति ।
षड्साधनसमायुक्त इति शारीरकेऽलिखत् ॥
(३५)

सर्वज्ञात्माख्य आचार्य आसीत् सर्वज्ञतत्त्ववित् ।
तथापि स अहंशून्यः स्वयं वै उररीकृतः ॥
(३६)

यथा –

गुरुचरणसरोजसन्निधाना –<br>
दपि वयमस्य गुणैकलेशभाजः ।<br>
अपि महति जलार्णवे निमग्नाः<br>
सलिलमुपाददते मीतं हि मीनाः ॥

(३७)

मलदोषादिसङ्कृल्प्ता धिषणा मम विद्यते ।<br>
कथं ज्ञानं भवेन्मह्यं मन्ये मृगमरीचिका ॥

(३८)

पूर्वकर्मविपाकेन जीवोऽहं नरताङ्गतः ।<br>
तथापि नैव जागर्मि मन्ये घोरविडम्बना ॥

(३९)

सन्न्यासिना परदृशा मुनिना यदुक्तं,<br>
सर्वं कथं भवति सम्भवमत्र वक्तुम् ।<br>
रत्नानि सन्ति रचितानि ह्यसङ्ख्यकानि,<br>
तान्येव कानिचन चात्र समुद्धरिष्ये ॥

(४०)

ग्रन्थारम्भप्रयोजनं दर्शयति –

पुरुषाऽपराधशतसङ्कुला विनिवर्तते प्रकरेण गिरः ।<br>
स्वयमेव वेदशिरो वचनादथ बुद्धिरुद्भवति मुक्तिफला ॥ १।१७

(४१)

बन्धाध्यासनिरूपणम् –

आच्छाद्य विक्षिपति संस्फुरदात्मरूपं<br>
जीवेश्वरत्वजगदाकृतिभिमृषैव ।<br>
अज्ञानमावरणविभ्रमशक्तियोगा –<br>
दात्मत्वमात्रविषयाश्रयताबलेन ॥ (१।२०)

(४२)

सकारणाध्यासानिरूपणम् –

अधिष्ठानमाधारमात्रं यदि स्यात् प्रसज्येत सत्यं तदाचोद्यमेतत् ।
न चैतत् सकार्यस्य मोहस्य वस्तुनधिष्ठानगीर्गोचरे लोकसिद्धा ॥ (१।३२)

(४३)

एवञ्च निरंशस्यापि सिद्धमात्मनोऽधिष्ठानत्वमित्युपसंहरति –

एवं स्फुरत्यपि दृगात्मनि तत्स्वरूपे–
णास्फुर्तिभाजि परिकल्पिततोपपन्ना ।
स्वाज्ञानतो जगदिदं परमेश्वरोऽसौ
जीवोऽहमित्यपि विभागवतोऽल्पकस्य ॥ (१।४९)

(४४)

शब्दस्यापरोक्षबोधकानुपपत्तिः –

न च गतार्थमिदं प्रतिभाति नो
न हि विधेः पदमात्मसमीक्षणम् ।
न खलु यागददाति जुहोतिवत्
पुरुषतन्त्रमिहात्मनिदर्शनम् ॥ (१।५९)

(४५)

इदानीं भेदादिवर्जितमित्यनेन कथितं वेदान्तवाक्यार्थस्वरूपं सोपपत्तिकं दर्शयति –

यद्वाक्यजातमथ वेदशिरोनिविष्टं,
यद्वापि लौकिकमखण्डमपास्य नान्यत् ।
शक्नोति वस्तु वदितुं तदशेषमेव,
ब्रूयादखण्डमिति तु प्रतिपादयामः ॥ (१।१४८)

(४६)

तत्त्वमस्यादेरखण्डार्थत्वोपपादनम् –

एतद् हि सोऽयमिति वाक्यमखण्डनिष्ठं
वक्तव्यमत्र गतिरस्ति न काचिदन्या ।

तद्देशकालमनुकृष्य स इत्यनेन
नायं पदार्थमुपढौकयते हि नैतत् ॥ (१।१५०)
(४७)

अखण्डार्थविवेचनम् –

अस्थूलादिवचोनिरस्तनिखिलद्वैतप्रपञ्चं परं,
जाग्रत्स्वप्नसुषुप्तिवर्जितमिदं प्रत्यक्स्वरूपं तथा ।
एकीकृत्य परस्परेण पदयोरर्थद्वयं तत्त्वतः,
प्रत्यक् चाद्वयमद्वयञ्च तदिति प्रेक्षस्व निःसंशयम् ॥ (१।२६४)
(४८)

अद्वैतं परिशोधितं भगवतो विष्णोः परं यत्पदं,
तच्छब्देन समर्पितं परिगृहीतादेयमात्मप्रभव् ।
यच्चोपाधिविवर्जितं तव निजं साक्षात्स्वरूपं तयो –
रेकत्वं परिवर्जितव्यवधितं प्रत्यक्षमीक्षस्व भोः ॥ (१।२६५)
(४९)

अधिकारिणां श्रद्धायामनिवार्यता –

श्रद्धत्स्व सौम्येति हि शास्ति शास्त्रं,
श्रद्धाधनत्वश्रुतिरस्ति चान्या ।
श्रद्धा तु येस्येत्यपरञ्च वाक्य–
मधीयते संशयकुत्सनाय ॥ (१।२६७)
(५०)

अज्ञानस्वरूपवर्णनम् –

अज्ञानमित्यजडबोधतिरस्क्रियात्मा
जाड्यञ्च मौढ्यमिति च प्रकृतिः प्रसिद्धा ।
सा चातिदुस्थितवपुर्दृशमद्वितीया –
मालिङ्गति स्म घृतपिण्ड इवाग्निमिद्धम् ॥ (१।३१७)
(५१)

कश्चिद्धीरः प्रत्यगात्मानमैक्ष-
दावृत्तचक्षुरमृतत्वमिच्छन् ॥२।१३

अस्त्वेवं ततः किमित्याशङ्क्यात्ममात्रप्रवृत्तवेदान्तानां भिन्नविषयतया न प्रत्यक्षादिबाध इत्याशयेन तेषामात्मविषयत्वं साधयति –

यत्तु प्रमाणमवधीर्य निजप्रमेये
कर्मत्वमर्थमवबोधयितुं प्रवृत्तम् ।
तत् प्रत्यगात्मविषयं भवितुं क्षमेत
तत् तत्त्वमादिवचनं न ततोऽन्यदस्ति ॥२।१५

ननु "आत्मा वा अरे द्रष्टव्यः" इति वेदान्तेषु विधिश्रवणाज्जैमिनेरिव तदर्थनिरूपकव्यासस्यापि चोदनातात्त्विकप्रामाण्यमेव संमतमस्त्वित्याशङ्क्याह –

द्रष्टव्य इत्यपि विधिर्न विधिप्रमेय-
मात्मानमेव विनियच्छति तत् कुतश्चेत् ।
अज्ञातता च परमात्मन एव यस्माद्
यस्माच्च कर्तृवशवर्ति न दर्शनं तत् ॥२।५०

ननु कथं तस्य वाक्यस्यात्मप्रमेयतानियामकत्वम्, "कृत्याश्च" इति तव्यस्य विध्यर्थता सूत्रविरोधादित्यत आह –

अर्हे कृत्यतृचश्च पाणिनिवचः स्पष्टं विधत्ते यत-
स्तस्माद् दर्शनयोग्यतां वदति नस्तव्यो न तत्त्वान्तरम् ।
तस्मादात्मपदार्थमात्रनियतं मेयत्वमेकान्ततो
द्रष्टव्यादिवचो वदत्यनुभवादज्ञात आत्मा यतः ॥२।५१

ननु सच्च त्यच्चाभवदिति तावत् सत्परिणामः प्रपञ्चः श्रूयते, अन्यथा अभवदित्ययोगात् । परिणामश्च परिणामिसमानसत्ताक इति प्रपञ्चो ब्रह्मवत्सन्नेवेति कथं तत्प्रमाणं तत्त्वावेदकं न भवेदित्याशङ्क्य अन्यथाभावमात्रं तत्र भवनशब्दार्थः । अन्यथाभावश्च विवर्तत्वेऽप्यस्ति, अन्यथा सत्यं चानृतं च सत्यभवदिति तद्वाक्य-

शेषे सत्यस्यानृतभवनोक्त्यनुपपत्तेः । किञ्च वाचारम्भणं विकारो नाम-धेयमित्यादिश्रुतिरपि प्रागुक्तन्यायेन विवर्तवादमाश्रित्य सत्यपरिणाम-निवारणेन प्रत्यक्षादिबुद्धिविषयात्तत्त्वं परमार्थत्वमुच्चैरपहर्तुं प्रवृत्ता, तद्विरोधादपि न परिणामवादः श्रुतिसम्मत इत्याशयेनाह-

आरम्भणादिवचनं सकलं प्रवृत्तं
प्रत्यक्षबुद्धिविषयादपहर्तुमुच्चैः ।
तत्त्वं यथोदितनयेन विवर्तवाद-
माश्रित्य सत्यपरिणामनिवारणेन ॥२।५५

ननु प्रथममुक्तत्वादपेक्षितत्वाच्च परिणामवाद एव सिद्धान्तोऽस्तु अन्यथा स्वाभिमतविवर्त्तस्यैव प्रथमाभिधानं किं न स्यादित्य आह –

साक्षादिहाभिमतमेव विवर्तवाद-
माहत्य सूचयति पूर्वमपेक्षमाणः ।
आरम्भणादिवचनेन विवर्तवादं
शक्नोति वक्तुमुदिते परिणामवादे ॥२।५९

परिणामविवर्तवादयोर्दृष्टान्तसाम्यं दर्शयन्नुक्तमर्थं विशदयति –

विवर्तवादस्य हि पूर्वभूमि–
र्वेदान्तवादे परिणामवादः ।
व्यवस्थितेऽस्मिन् परिमाणवादे
स्वयं समायाति विवर्तवादः ॥२।६१

ननु "कथं नु भगवः स आदेशो भवति" इति श्रुतिरेकविज्ञाना-त्सर्वविज्ञानमाक्षिपन्ती शुद्धद्वैतमाक्षिप्य मृदादिदृष्टान्तोपादानेन परिणामं विवक्षति । एकस्मिन् वाक्ये च पूर्वानुरोधेनैवोत्तरं नेतव्यम् । अतस्तन्मूलं सूत्रमपि तदाशयं किं न स्यादित्याशङ्क्य कथं न्विति वाक्यस्य पूर्वपक्ष-तया शुद्धाद्वयस्य वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्यादिना विकारमृषात्ववर्णनेनोपपद्यमानतया च न विकारवादस्य प्रथमं श्रवणेऽपि संमतत्वं किं तूक्तविधया विवर्तत्वव्युत्पादनहेतुतया पूर्वपक्षतया च श्रुतिसूत्रकाराभ्यां प्रथमं स आदृत इति दृष्टान्तान्तरेणाह–

उपायमातिष्ठति पूर्वमुच्चै-
रूपेयमाप्तुं जनता यथैव ।
श्रुतिर्मुनीन्द्रश्च विवर्तसिध्द्यै
विकारवादं वदतस्तथैव ॥२।६२

कस्य तर्हि विकारवादः संमतो य इहाभ्युपगत इत्युच्यत इत्याशङ्क्य प्रागुक्तारम्भादिमतानामभ्युपगन्तृनाह–

आरम्भवादः कणभक्षपक्षः
संघातवादस्तु भदन्तपक्षः ।
साङ्ख्यादिपक्षः परिणामवादो
वेदान्तपक्षस्तु विवर्त्तवादः ॥२।६३

विकारवादस्य परकीयमतत्वकीर्तनफलमाह–

विकारवादं कपिलादिपक्ष–
मुपेत्यवादेन तु सूत्रकारः ।
श्रुतिश्च संजल्पति पूर्वभूमौ-
स्थित्वा विवर्त्तप्रतिपादनाय ॥२।६४

एवं परिणामादिदृष्टिनामेकाधिकरिणि क्रमवर्त्तिनीनां मोक्षोपयोग उक्तः । संप्रति विरुद्धदृष्टीनामेकपुरुषाश्रयत्वासंभवादधममध्यमोत्तमाधिकारिभेदा-श्रयत्वं ये वदन्ति तन्मतमनुवदति –

कृपणधीः परिणाममुदीक्षते
क्षपितकल्मषधीस्तु विवर्तताम् ।
स्थिरमतिः पुरुषः पुनरीक्षते
व्यपगतद्वितयं परमं पदम् ॥२।८९

एवं दृष्टित्रयस्यैकपुरुषाश्रयत्वसमर्थनमुपसंहरति –

श्रुतिवचांसि मुनिस्मरणानि च
द्वयविशारदगीरपि सर्वशः ।

त्रयमपेक्ष्य दशात्रितयं विना
न हि घटामुपयान्ति कदाचन ॥२।९३

ननु परिणामवादाश्रयणेऽपि समन्वयविरोधपरिहारः सेत्स्यतीत्युक्ते किं तदर्थ विवर्ताश्रयणेनेति चेत्सत्यं, सप्रपञ्चाद्वयसमन्वयस्य पराभ्युपेतस्य तेनाक्षादिविरोधः परिह्रियेत । तं पुनरखण्डाद्वयसमन्वयस्य स्वसंमतस्येति समन्वयविशेषं श्रुत्यादिसंमतं दर्शयन्नाह–

अखण्डवाक्यार्थमनुव्रजन्ती
समन्वयोत्थापितबुद्धिवृत्तिः ॥
अक्षादिभिस्तत्त्वनिवेदने हि
सद्यः परिम्लायति निर्विशङ्कम् ॥२।९६

ननूभयप्रामाण्यानुरोधेन सविशेषमेवाद्वयं किं नाङ्गीक्रियेत इति चेत् न मृषात्वेन श्रुत्युक्तविकारादिविशेषस्य श्रुतिसमन्वयगोचरत्वायोगात् । किञ्च एकमेवाद्वितीयम्, अपागादग्नेरग्नित्वं, नेहनानास्ति इत्यादिवचनैः "प्रकृतैतावत्त्वं हि प्रतिषेधति" इत्यादिसूत्रैस्तद्व्याख्यातृभाष्यकारादिवाक्यैश्चाखण्डतात्पर्यस्यैव श्रुतेराश्रयणीयत्वादित्याशयेन प्रथमाध्यायोक्तं स्मारयन्नाह–

अखण्डमेवाद्वयमात्मतत्त्वं
त्रयीशिरोवाक्यमनुप्रविष्टाः ।
वदन्ति शब्दा इति शब्दशक्ति-
निरूपणे पूर्वमुदीरितं हि ॥२।९७

ततः किमित्याशङ्क्याह –

अतो विरोधस्य निराससिद्ध्यै
निरस्यतेऽक्षादिषु तत्त्वभागः ।
संरक्ष्यते संव्यवहारशक्ति–
भागः पुनः सर्वमतोऽनवद्यम् ॥२।९८

इदानीं बादरायणन्यायसिद्धमपि प्रथमबाधकत्वे प्रसक्तानुप्रसक्त्यो दाहरणमाह—

ब्रह्मपुच्छमितिवाक्यगामिनो-

ब्रह्मपुच्छमिति शब्दयोर्द्वयोः ।

ब्रह्मशब्दबलवत्तरत्वतः

पुच्छशब्दपरिपीडनं मतम् ॥२।१२०

ननु स्वीयाविद्या स्वीये रूपेऽवस्थितिः स्वप्रकाश इति च स्वप्रकाशे सर्वज्ञे नित्यमुक्ते ब्रह्माण्यज्ञानविषयत्वमाश्रयत्वं चोक्तमनुपपन्नं, स्वप्रकाशादिस्वभावे तस्मिंस्तदयोगात् । किं चाहमज्ञ इतिजीवस्यै वाज्ञत्वानुभवात्तदाश्रयत्वं युक्तम् । भाष्यकारादिभिस्तत्रतत्राधिकरणादौ जीवाज्ञानाभिधानाच्च तदयुक्तमित्याशङ्क्याह –

अज्ञानि ब्रह्म जीवो भवति भवति च स्पष्टमज्ञानमस्य

प्रागस्पष्टं सदन्तःकरणनिपतितज्योतिराभासयोगात् ।

चैतन्यैकप्रतिष्ठं स्फुरति न हि तमस्तादृशं यादृशं तद्

बुद्धिस्थाभासनिष्ठं स्फुरति तदुचितं जीवमौढ्याभिधानम् ॥२।१६४

इदानीं मायाकार्यत्वेन प्रसिद्धवियदादिपक्षकमपि हेत्वन्तरेण तद-भेदानुमानमाह –

एकाज्ञानविकल्पितं सकलमेवाकाशपूर्वं जगद्

बाध्यत्वादिह यद्यदीदृशमदस्तादृग् मतं स्वप्नवत् ।

बाध्यं चेदमभीप्सितं भवति वस्तस्मादिदं तादृशं

शुद्धं धूमवदेव साधनमिदं तत्पाञ्चरूप्यान्वयात् ॥२।१७०

ननु तदैक्षत बहु स्यामित्यादिश्रुतिर्ब्रह्मणः कारणत्वं प्रतिपाद-यति, न चैकस्य विलक्षणानेकोपादानत्वं संभवतीत्यज्ञानस्य वियदादि-कारणत्वाद्यनुमानं श्रुतिविरुद्धमित्याशङ्कामनूद्य निराकरोति –

अनुमानमागमविरुद्धमिदं

प्रतिवादिनो यदि मतं तदसत् ।

न तमोऽतिरिच्य जगतो जनक-
प्रतिपादकं वचनमस्ति यतः ॥२।१७१

ननु ब्रह्मण एवाज्ञानाश्रयत्वे कथं दुःखादिसंसारस्य सर्वज्ञत्वादेश्चविद्याकार्यस्य लोकवेदयोर्व्यवस्थाप्रसिद्धिः, अविद्याकार्याणां तदाश्रयत्वस्य चैकत्रैवोचितत्वादित्याशङ्क्याह –

अज्ञानिनो भवति दुःखमनेन क्लृप्तं
सर्वेश्वरस्य न खलु प्रतिभासतोऽपि ।
सर्वज्ञतादिगुणजातममुष्य नास्य
संसारिणः स्फुरति मोहसमन्वितस्य ॥२।१७३

अन्यत्रापीत्युक्तं भाष्यकारोक्तमेव दर्शयति–

जीवस्य कार्यकरणाधिपतेरविद्या–
दोषान्वितस्य तमसावृतमन्ददृष्टेः ।
ज्ञानं निरावरणमैश्वरमित्यपीदं
भाष्याक्षरं कथितनीतिवशेन योज्यम् ॥२।१७५

नीतिमेव विशदयति–

स्पष्टं तमःस्फुरणमत्र न तत्र तद्वत्
सर्वेश्वरे तदिति तत्र निषिध्यते तत् ।
बिम्बे तमोनिपतिते प्रतिबिम्बके वा
देहद्वयावरणवर्जितचित्स्वरूपे ॥२।१७६

अत एव भाष्यकारादेर्जीवेश्वरयोः किञ्चिज्ज्ञतासर्वज्ञतावचनमप्यज्ञानावृतस्वस्वरूपत्वतदभावपरं न तु किञ्चिज्ज्ञत्वसर्वज्ञत्वमूलतया जीवेश्वरयोस्तयोरज्ञानतदभावपरमित्याशयेनाह –

किञ्चिज्ज्ञताऽस्य तमसावृतनित्यदृष्टेः
सर्वज्ञता पुनरमुष्य परस्य पुंसः ।
अज्ञानतज्जकरणादिविवर्जितत्वा-
दित्येतदेवमुपपन्नतरं हि भाष्यम् ॥२।१७७

अज्ञानतज्जकरणराहित्यमीश्वरस्य, किञ्चिज्ज्ञता च जीवस्योक्ता तयोस्तद्विपरीततामनुभवेन द्रढयति–

अज्ञोऽहमित्यवगतिर्न परस्य पुंसः
सर्वज्ञतावगतिरात्मनि नास्य पुंसः ।
अत्रापि कारणमहङ्कृतिवर्जितत्वं
तद्बद्धता च परमेऽल्पतरे च पुंसि ॥२।१७८

ननु श्रीकृष्णरघुनाथादेः श्रुतीतिहासपुराणप्रामाण्येनेश्वरत्वं वक्तव्यं, तस्य चाहङ्कारयोगात् । कथमीश्वरस्याहङ्कारवर्जितत्वमित्याशङ्क्यासिद्धो हेतुरित्याशयेनाह –

बिम्बस्य नापि तमसि प्रतिबिम्बकस्य
सङ्घट्टनं क्वचिदहङ्करणेन शक्यम् ।
वक्तुं प्रभोः सकललोकहितावतार –
स्वेच्छाविनिर्मितवपुर्वरमन्तरेण ॥

एवं प्रमाणाभावादनुपपत्तेश्चेश्वरस्य नाहङ्कृतियोग इत्युक्तम् । इदानीं तदभावेऽननुभूयमानमपि तस्य स्वरूपावरकमज्ञानं किं बलात्सिध्येन्न वा तदन्यत्तादृगज्ञानकार्यं तस्मिन्नस्तीत्याशयेनाह –

नाहङ्कृतिञ्च परिहृत्य तमस्विताधीः
सम्भाव्यतेऽपहृतपाप्मनि नित्यमुक्ते ।
तामन्तरेण घटते न च मूढभाव–
सम्भावनाऽपि परमेशितरि प्रसन्ने ॥२।१८०

नन्वीश्वरस्यापि शरीराभ्युपगमेऽज्ञत्वमवश्यं वाच्यं शरीरत्वस्याज्ञत्वव्याप्तत्वात्, अन्यथा मुक्तेऽपि तत्प्रसङ्गादिति चेत्, सत्यम्, अस्त्येवेश्वरेऽपि जगन्निदानमज्ञानं तथापि न तस्याज्ञत्वमित्युक्तम् । मुक्ते तु तदपि नास्तीति विशेषः । तत्र च निमित्तं सर्वज्ञतया तद्वशित्वम् । जीवस्तु विपरीततया तद्वश्य इत्येवमेवात्मतत्त्वं तदभिभावकं तदभिभूतं चेत्याशयेनाह–

स्वेच्छाविनिर्मितवपुर्भजतोऽपि तस्य
नाज्ञानितावगतिरस्ति वशित्वहेतोः ।
वश्यत्वहेतुकमिदं स्फुरणं नराणां
नाहं विजान इति नास्ति तदीश्वरस्य ॥२।१८१

'अज्ञानादिकमीश्वरस्य नटनम्' इत्यत्र हेतुतया रघुनाथादेः पारमेश्वरं स्वभावं दर्शयन् तदभावाज्जीवस्य तद्वैपरीत्यमाह –

अज्ञानवर्जिततया परमेश्रोऽसौ
सर्वज्ञ एव यदहङ्कृतिबन्धहीनः ।
ज्ञानं निरावरणमिष्टममुष्य यस्मा–
ज्जीवस्य सावरणमेव यतोऽनभिज्ञः ॥२।१८३

ननु न स्फुरतीति नञा स्फुरणाभाव एव प्रतीयते, स चाविद्यानिमित्तश्चेत्, अस्तु नाम । न चैतावतैकस्य युगपद्भावाभावौ परिहर्तुं शक्येते इति दृष्टान्तसमर्थनं पूर्ववादिन आशङ्क्याह –

स्फुरणास्फुरणे च नात्मनः सदसद्भावतया मनीषिते ।
स्फुरणं चितिरात्मवस्तुनस्तदविद्याऽस्फुरणञ्च कथ्यते ॥२।२०५

नन्वेवं शुकवामदेवादेर्ब्रह्मविदो मुक्तिरन्येषांञ्च तदज्ञानात् संसार इति काण्डद्वयात्मकबन्धमोक्षव्यवस्थाशास्त्रप्रमाणं स्यादिति शङ्कते –

नन्वेवं चेद् बन्धमोक्षव्यवस्था–
शास्त्रं कुप्येन्नाप्रबोधात् प्रवृत्तेः ।
बद्धो मुक्तो ज्ञानवानज्ञ इत्य–
प्येतत् सर्वं यावदज्ञानमिष्टम् ॥२।२१५

ननु सर्वेषामप्रतिपन्नानुभवसिद्धस्येश्वरादिप्रपञ्चस्य कथं शुक्तिरजतवद्दृढत्वमित्याशङ्क्याऽविद्याप्रमुष्टधियाभेव देहात्माभेदवत्तदनुभवान्न शुक्तिरजतादेस्तस्याध्यस्तत्वे कोऽपि विशेष इत्याशयेनाह–

प्रभुरेष सर्वविदहं कृपणो जगदेतद्भुतवितानमिति।
प्रतिपत्तयस्तिमिरलुप्तदृशो यदिहोद्भवन्ति न तदद्भुतकम् ॥२।२२३

ननु किंबलादेतस्य महाजनानुभवविरुद्धमनिर्वचनीयत्वं कल्प्यत इत्याशङ्क्य श्रुतिन्यायसिद्धमपि तद्विद्वदनुभवबलादाह –

अभयं सनातनमनातुरधी–
रवलोकयनिनजमनन्तसुखम्।
न मुनिः प्रपश्यति न किमप्यसुखं
सकलं जिघत्सति जगत् स्वचिता ॥२।२२४

नन्वात्मातिरिक्तद्वैताभावे गुर्वादेस्तत्त्वज्ञानोपायस्याभावात् कथं विदुषामनुभवः सिध्येदित्याशङ्क्याविद्यकस्य व्यावहारिकस्य तस्य सत्त्वान्नोक्तदोष इत्याशयेनाह –

तव चित्तमात्मतमसा जनितं
परिकल्पयत्यखिलमेव जगत्।
तव कल्पनाविरचितः स गुरु–
स्तव रूपमद्वयमुदाहरति ॥ २।२२५

नन्वसत्यस्य शुक्तिरजतादेः स्वोचितकार्यजनकत्वाद् गुर्वादेरपि कल्पितत्वे तन्न स्यात्। यदि तत्स्यात् सत्य एव स्यादित्याशङ्क्या-र्थक्रियाजनकस्य सत्यत्वासम्प्रतिपत्तेर्दृश्यस्य च शुक्तिरजतादेर्मिथ्यात्वस्य दृष्टत्वाद् गुर्वादेरपि तथैवेत्याह–

न हि चित्तदृश्यमपि सत्यमिति
प्रतिपन्नमस्ति भुवि किञ्चिदपि।
रशनाभुजङ्गसदृशं सकलं
जगदिन्द्रजालमिति सिद्धमतः ॥२।२२६

ननु तर्हि वर्णस्वरूपमेवार्थप्रतिपत्तौ कारणमस्तु न मृषा स्वरवैशिष्ठ्यं

पौर्वापर्यञ्चेत्याशङ्क्य स्वरादिभेदेऽर्थप्रतीतिविशेषदर्शनात्तदपि कारणमे-
वेत्याशयेन नैरुक्तं वचनमाह –

मन्त्रो हीनः स्वरतो वर्णतो वा
मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति
यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ २।२३०

ननु परमते चोदनाद्यानुपूर्व्यादेरलीकत्वमसिद्धं, तन्मतेऽनिर्वचनीया-
भावात्। एवं श्रोत्रेन्द्रियमपि नालीकं किन्तु प्रसिद्धवलयसदृशं नभः। ततश्च
सत्यमेव परमते बोधकमिति तद्दृष्टान्तासिद्धिमाशङ्क्य कैमुतिकन्या-
येनानिर्वचनीयस्य बोधकत्वमाह –

भ्रान्तं तथोपचरितञ्च यथाविभाग–
मङ्गीकृतं कणभुगादिमुनीन्द्रमुख्यैः ।
यन्नास्ति तत्फलनिबन्धनमस्मदीये
तन्त्रे तमोविरचितं न फलाय कस्मात् ॥२।२३४

एवं परमतेनापि कल्पितस्य सत्यबोधकत्वमुपपादितं स्वमते
त्वसत्यस्यैव गगनादेर्निखिलप्रपञ्चस्य मायाभिः पुरुरूप ईयत इति
श्रुत्यनुसारेण कारणत्वाभ्युपगमाद् गुर्वादेरपि तथाविधस्य तदुपपन्नमेव
स्वरूपेणालीकस्याप्यधिष्ठानसदात्मत्वादित्याशयेनाह –

परमेव तत्त्वमगृहीतमभू–
दखिलस्य कारणमनर्थकरम् ।
परमेव तत्त्वमवबुद्धमतः
परितृप्तये भवति पुष्कलतः ॥२।२३६

नन्वेवमपि न ज्ञानमात्रान्मम कृतकृत्यता "कर्मणैव हि संसिद्धिमास्थिता
जनकादयः" इत्यादेः कर्मणो मुक्तिहेतुत्वावगमादित्याशङ्क्य अन्तःकरण-
शुद्धिलक्षणां सिद्धिं प्रति कर्मणो हेतुत्वं तद्व्याक्यार्थः अन्यथा "नान्यः
पन्था विद्यतेऽयनाय", "ज्ञानादेव तु कैवल्यम्" इत्यादिशास्त्रविरोधादतो
ज्ञानमात्रात् कृतकृत्यता भवेदित्याशयेनाह –

तव बोध मात्रमुपनेयमत –

स्तव मोहमात्रमपनेयमपि ।

तव बोधमोहजनिहानिकरं

वचनं त्रयीशिरसि तत्त्वमिति ॥२।२३८

नन्वविद्यावद्विषयत्वे विधीनां बाधितार्थतयाऽप्रामाण्यप्रसङ्ग इत्याशङ्क्य वस्तुतस्तदर्थस्य वेदान्ततन्मूलन्यायबाधेऽपि व्यावहारिकमेव प्रामाण्यं, न वेदान्तानामिव तात्त्विकमित्याशयेनाह –

व्यवहारगोचरमतः सकलं

विधिवाक्यमित्यवगतिं मनसि ।

उपनीय वेदशिरसां विधिभि–

र्न विरोध इत्यपि समाकलय ॥२।२४७

एवमद्वयब्रह्मपरवेदान्तानां भेदग्राहिमानान्तरविरोधनिरासमर्थनं द्वितीयाध्यार्थमुपसंहरति –

एवं वेदान्तवाक्यैरवगतिपदवीमद्वये नीयमाने

प्रत्यक्तत्त्वे समस्तद्वयकृति तमसि क्षीयमाणे च सद्यः ।

स्वाराज्यं त्वय्यवाप्ते परमसुखभुजि स्वच्छचैतन्यमात्रे

लेशो मानान्तराणामपि दुरधिगमस्तत्र दूरे विरोधः ॥२।२४८

शारीरभाष्यकमिदं ह्यविरोधसंज्ञं

सङ्क्षिप्य चात्र मुनिना ग्रथितं द्वितीये ।

तस्यैव नैकविधमौक्तिकतुल्यपद्य-

मुद्धृत्य सर्वमुनयेऽथ समर्पयामि ॥

इति सङ्क्षेपशारीरकसारसङ्ग्रहो द्वितीयोऽध्यायः ।

# सङ्क्षेपशारीरकसारसङ्ग्रहः

## तृतीयोऽध्यायः

श्रुतिस्मृतिप्रमाणेभ्यः श्रुत्यनुकूलतर्कतः ।
भविष्यद्वृत्तिमालम्ब्य साधनञ्चात्र कथ्यते ॥

यानि त्वया पृष्टानि साधनानि तानि तृतीयाध्यायनिविष्टैश्चतुर्भिः पादैः क्रमेण निरूपितान्येवेत्यभिप्रेत्याहाचार्यः –

वैराग्यस्य दृढत्वमेकमपरं तत्त्वंपदार्थज्ञता
वाक्ये निर्गुणनिष्ठिते च सकले न्यायादियत्तामतिः ।
सम्यग्ज्ञानसमीपदूरभवयोर्हेत्वोर्विवेकज्ञता
वाक्यार्थप्रतिपत्तिसाधनमिदं यत्नेन कृत्यं यतेः ॥३।३

ननु सर्वेषां दृष्टश्रुतविषयभोगविषयस्य रागस्याज्ञानसिद्धस्येष्यमाणविषयप्राप्त्यैव निवृत्तिः स्वानुभवसिद्धा, तथा चैहिकस्यामुष्मिकस्य च हिरण्यगर्भान्तस्य विषयभोगस्याप्राप्तौ कथं ततो वैराग्यम्, तदभावे च कथंतमं तद्दार्ढ्यर्यम्, कथंतमां चेष्यमाणविषयसिद्धये लौकिकवैदिककर्मानुष्ठानव्यग्रचित्तस्य तत्त्वंपदार्थपरिशोधनावकाश इति, तत्राह–

संसारदोषमवधारयतो यथावद्
वैराग्यमुद्भवति चेतसि निष्प्रकम्प्यम् ।
वैराग्यजन्मनि दृढे च सति प्रवृत्ति-
स्तत्त्वंपदार्थपरिशोधनकर्मणि स्यात् ॥३।४

ननु निरुपाधिकात्मन एव मुक्तिभाक्त्वात्तस्यैव बन्धरूपसंसारभाक्त्वं वाच्यम्, बन्धमोक्षयोरेकाश्रयत्वनियमात् । ततश्च बन्धस्य वास्तवत्वमपरिहार्यमिति तत्राह–

ब्रह्मैव संसरति मुच्यत एतदेव
दौवारिकं भवति संसरणं तु तस्या ।

मुक्तिः पुनर्भवति चिद्वपुषैव तस्य
स्वाज्ञानतः स्वमहिमप्रतिबोधतश्च ॥३।७

ननु पादोऽस्य विश्वा भूतानि, ममैवांशो जीवलोक इत्यादि-श्रुतिस्मृतिभिर्जीवस्य परांशत्त्वप्रतीतेरग्निविस्फुलिङ्गादिदृष्टान्तश्रुत्या च तस्य परविकारत्वप्रतिपत्तेश्च तयोर्भेदाभेदावुपेयौ, अन्यथांऽशांशिभा-वाद्यनुपपत्तेरिति, नेत्याह –

नांशः परस्य न च तस्य विकार एष
नात्यन्तमेव च विभिन्नवपुः परस्मात् ।
जीवोऽयमभ्युपगतः कुत एतदेवं
ब्रह्मात्मतावचनजातविरोधहेतोः ॥३।१०

इतोऽपि जीवस्य वस्तुतोंऽशत्वादिकल्पना न घटत इत्याह–

अपि च विश्वमनु प्रविवेश तत्
परममेव पदं परमात्मनः ।
इति वदत्सु सुहृत्स्विव तत्पर-
श्रुतिवचःसु कथं स ततोऽधिकः ॥३।११

ननु जीवब्रह्मणोरत्यन्ताभेद ब्रह्मणोऽपि स्वगोचराज्ञानाश्रयतया संसारित्वं स्यादित्याशङ्क्य, किं ब्रह्मशब्देन चिन्मात्रं विवक्षितमुत जगदुपादानत्वादिविशिष्टं चैतन्यमिति विकल्पमभिप्रेत्याद्यमङ्गीकरोति–

चैतन्यवस्तुविषयाश्रय एव मोहो
नाद्वैतवस्तुविषयाश्रयकोऽप्रतीतेः ।
बुद्‍ध्यादिवेष्ठितचितो न तमस्वितेति
ब्रह्माश्रयत्वमुदितं तमसः पुरस्तात् ॥३।१२

जीवव्यावृत्तेश्वररूपेऽज्ञत्वाद्यभावं मानाभावेन प्रपञ्चयति–

ब्रह्माश्रयं न हि तमोऽनुभवेन लभ्यं
नाप्यागमान्न च किमप्यपरं प्रमाणम् ।

ब्रह्माश्रयत्वविषयं तमसस्ततश्च
प्रत्यक्प्रकाशविषयाश्रयमेतदस्तु ॥३।१४

ननु जीवत्वमेवाज्ञानाश्रयतावच्छेदकमुपेयं न तु चिन्मात्रत्वं जीववदीश्वरस्यापि इतरथाऽज्ञत्वादिदोषप्रसङ्गादतो जीवाश्रितैवाविद्या ब्रह्मविषयेति, नेत्याह–

जीवत्वमेव तु तदाश्रयमध्यपाति
नेच्छन्ति युक्तिकुशला न हि युज्यते तत् ।
अज्ञानमेव खलु तन्न तमस्तमस्वि
चैतन्यवस्तु पुनरस्तु न तद्विरोधः ॥३।१५

किं तत् सप्तदशात्मकं मुख्यं लिङ्गमिति वीक्षायामाह–

इह तावदक्षदशकं मनसा
सह बुद्धितत्त्वमथ वायुगणः ।
इति लिङ्गमेतदमुना पुरुषः
खलु सङ्गतो भवति जीव इति ॥३।२०

कल्पितस्यापि संसारस्यानादित्वादात्मनो न नित्यमुक्ततेत्याशङ्क्य, कल्पितराहित्यस्य वास्तवस्याधिष्ठाने तत्कालेऽप्युपपादितत्वात् सदा नित्यशुद्धादिरूप आत्मेति फलितमाह–

परिपूर्णचिद्रसघनः सततं
स्वमहिम्नि तिष्ठति निरस्तमले ।
न तथापि तत्त्वमितिवाक्यकृतां
मतिमन्तरेण तव केवलता ॥३।४०

ननु वाक्यकृतामिति विशेषणमयुक्तम्, अविद्याविनिवर्त्तकसाक्षात्कार स्यात्मन्यन्यथैव सम्भवादित्याशङ्क्याह –

न तव प्रतीचि करणानि बहि–
र्विषयाणि येन करणानि सदा ।

सहजं च गाढमतिमूढतमं
तम इत्यतः पुरमनुव्रजसि ॥३।४१

नन्वाविद्यकोपाधिकल्पितमात्मनः संसरणमिति, स्वकपोलकल्पितयुक्तिभिर्माप्रतारयसि, न त्वत्र किं चिन्मानमस्तीति तत्राह –

स समान इत्युपनिषद्वचनं
प्रतिपादयत्युदितमर्थमतः ।
स्वमनीषिकेति न कदा चिदपि
प्रतिपत्तिरत्र भवतो भवतु ॥३।४२

एवं घटाकाशदृष्टान्तेनात्मनो गमनादि कल्पितमित्युक्तम् । इदानीं रूपं रूपं प्रति रूपो बभूवेत्यादिवचनाज्जलसूर्यादिप्रतिबिम्बदृष्टान्तेनापि तदुपपादयति –

पुरहेतुकं यदभवच्च विभोः
परिकल्पितं किमपि चित्सदृशम् ।
जलपात्रहेतुकमिव द्युमणे–
स्तदसंततं भवति तद् व्रजति ॥३।४३

ननूक्तोपाधिरेव परलोकगमनमनुपपन्नं कुतस्तदुपाधिकं तदात्मनि स्यात् । बुद्ध्यादेर्जडस्य चेतनानधिष्ठितस्य स्वतो गमनादिप्रवृत्त्ययोगात्, जीवस्य चोत्क्रान्तिकाले संपिण्डितकरणत्वेन विशेषबोधरहितस्य तत्प्रेरकत्वायोगात्, परमात्मनोऽपि कूटस्थचिन्मात्रतथा तत्प्रेरणायोगादित्याशङ्क्य परमेश्वरस्य मायाशक्तिमतस्तदधीनव्यापारेण पुरतदवच्छिन्नजीवाधिष्ठातृत्वसम्भवात् पुरादिगमनोपपत्तिरिति वक्तुं तस्य तच्छक्तिमत्त्वमाह –

जडशक्तिरस्ति च परस्य विभोः
परमात्मनस्तम इति प्रथिता ।
पुरमष्टकं तव यथा भवति ।
श्रुतितः प्रसिद्धमिदमप्यखिलम् ॥३।४४

ननु न तस्य कार्यं करणं च विद्यत इत्यादिश्रुतेः परमात्मनः कृति-कर्त्तव्याभावप्रतीतेः कथं माययापि तस्य पुराद्यधिष्ठातृत्वसम्भव इत्याशङ्क्य तस्य स्वरूपेण वस्तुतस्तदभावेऽपि कल्पितरूपेण तदुप-पत्तिरित्यभिप्रेत्य पुरहेतुकं यदभवदित्युक्तसंसारयोग्यजीवरूपदृष्टान्तेन सर्वाधिष्ठातृत्वादियोग्यमीश्वरपदवाच्यं सर्वज्ञत्वसर्वशक्तित्वादिविशिष्टा-त्मकं परमात्मनो मायिकमीश्वरत्वाख्यं रूपमाह –

पुरहेतुकं तव यथा च वपु–
र्भवतीय जीववचसो विषयः ।
जडशक्त्युपाधिकममुष्य तथा
परमेश्वरस्य वपुरुद्भवति ॥३।४५

ईश्वरस्य मायिकोक्तरूपवत्त्वेऽपि जीवस्य तदभिन्नत्वात् कथं तदधिष्ठेयत्वमित्याशङ्क्य तदज्ञानाद् विपरीतरूपाभिमानित्वाच्च तद-धिष्ठेयतया जीवस्य कर्माधीनसंसारानर्थसिद्धिरिति फलितमाह –

पुरहेतुरूपघटितस्य दृशे–
र्जडशक्त्युपाधिपरमेश्वरतः ।
भयमुद्भवत्यनवबोधवशा–
दिति च त्रयीशिरसि राजपथः ॥३।४६

स्वर्गनरकादिशब्दानां सुखदुःखमात्रवाचित्वात्तदनुभवस्य चेहैव सम्भवात् कर्मवशाद् गन्तव्यदेशविशेष एव नास्ति, तत्प्रमाणाभावात् । धूमादिमार्गश्रुतेरर्थवादत्वादर्थवादानां च विधिनिषेधापेक्षितस्तुतिनिन्दा-मात्रपरतया स्वार्थे प्रामाण्याभावादिति केचित्, तान् प्रत्याह –

सुकृतदुष्कृतकर्मवशादयं
दिवमथो यमसादनमेव वा ।
अनुभवेन समाप्य पुनर्मही–
तलमबोधवशादवरोहति ॥३।४९

ननु केवलेष्टादिकारिणामनिष्टादिकारिणां चाज्ञानां चन्द्रलोकं

संयमिनीं वा गत्वा कर्मफलं भुक्तवताम् अथैतमेवाध्वानं पुनर्निवर्त्तन्ते इत्यादिवचनादिहावरोहादुक्तविधया संसारानुपरमेऽपीष्टादिसमुच्चितसूत्राद्युपासनावशादर्चिरादिमार्गेणापरं ब्रह्म प्राप्तानां विनाऽप्यात्मतत्त्वानुभवं न तेषामिह पुनरावृत्तिः, एतेन प्रतिपद्यमाना इमं मानवमावर्त्तं नावर्त्तन्त इति वचनादिहावरोहाभावात् संसारोपरमसिद्धिरिति, नेत्याह –

यदि वा समुच्चयवशात्पुरुषः
कमलासनं व्रजति कामुकधीः ।
पुनरेव मानवमिमं तु विना
परिवर्त्तमाव्रजति मूढमतिः ॥३।५०

ब्रह्मलोकंगतानां पुनरावृत्तौ "अनावृत्तिः शब्दात्" इत्यधिकरणविरोध इत्याशङ्क्यक्रममुक्तिफलकोपासनाभिर्ब्रह्मलोकं गतानां "कार्यात्यये तदध्यक्षेण सहातः परमभिधानात्" इत्यत्रोक्तन्यायेन तत्रैवोत्पन्नविवेकवैराग्यादिमतां तदध्यक्षोपदेशलब्धतत्त्वबोधानां तद्बलान्मुक्तिरित्यन्त्याधिकरणं ज्ञानादेव कैवल्यमित्येतद्विषयमित्यभिप्रेत्याह –

अथ वा स तत्र परमात्ममतिः
परिमुच्यते सकलबन्धनतः ।
क्रमयोगमुक्तिरुदिता श्रुतिषु
प्रतिशाखमेवमुपपन्नतरा ॥३।५१

एवं केवलेष्टादिकारिणां समुच्चयकारिणां चोत्कृष्टलोकप्राप्तावपि जन्ममरणादिसंसारानुपरम इत्युक्तम् । इदानीं मनुष्येषु प्राकृतजनबाहुल्यादिष्टादिकर्मानुष्ठानमेव दुर्लभं बाहुल्यसम्भवात्तद्बलात् पुनः पुनः कीटपतङ्गादिक्षुद्रजन्तुभावरूपतृतीयपथप्राप्तानामत्यन्तं कष्टप्राप्तिरपरिहार्येति वैराग्यार्थं वदन् अथैतयोः पथोर्न कतरेण च न तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं स्थानमिति श्रुत्यर्थं दर्शयति –

देवयानपितृयाणयोः पथो–
र्ज्ञानकर्मरहितत्वकारणात् ।

नैकमप्यनुसरन्ति ये पुनः
क्षुद्रजन्तव इहोद्भवन्ति ते ॥३।५२

एवं पुण्यपापफले संसारे वैराग्यार्थं मिथ्यात्वानित्यत्वजन्म-मरणानुपरमदुःखबाहुल्यादिदोषं प्रदर्श्य पुण्यादेरपि प्रयोजकं कामान् यः कामयते मन्यमान इत्यादिश्रुत्युक्तं दर्शयन्नुपसंहरति –

इति कामुकस्य तव संसरणं
शतशो बभूव बत मूढमतेः ।
इह विप्रजन्मनि विरक्तमतिः
कुरु साधनं यदपवर्गकरम् ॥३।५३

अपवर्गस्य ब्रह्मभावस्यासाध्यत्वात्तत्साधनमेव नास्तीत्याशङ्क्य तद्व्यञ्जकज्ञानान्तरङ्गसाधनानि मुमुक्षुणाऽनुष्ठेयानीत्याह –

श्रवणादिकं शमदमादिपरः
परमात्मनः परमभागवतः ।
कुरु तावता परममेव पदं
परमात्मनस्त्वमवलोकयसि ॥३।५४

परमपदावलोकनेऽपि किं स्यादित्याशङ्क्य य एतद्विदुरमृतास्ते भवन्ति, एतावदरे खल्वमृतत्वमिति श्रुतेः सर्वदुःखरहितसुखा-त्मकब्रह्मभावरूपाऽमृतत्वं ततो भवतीत्यभिप्रेत्य तदभावे दुःसहदुःखानु-परमम्, अथेतरे दुःखमेवापियन्तीत्यादिश्रुत्युक्तं सदृष्टान्तमाह –

यदि तन्न पश्यसि हरेः परमं
पदमम्बुशीतलमिवेद्धशिराः ।
न खलु प्रदीप्तशिरसोऽस्ति सुखं
तव दुःखपावकशिखाभिरहो ॥३।५५

नन्वात्मनः स्वतःकर्तृत्वाद्यभावे यथाकारी यथाचारी तथा भवतीत्यादिश्रुतेः, कर्त्ता शास्त्रार्थवत्त्वादिति सूत्रस्य च पीडा स्यादित्या-शङ्क्य, श्रुतेरेवंजातीयकाया औपाधिककर्तृत्वाद्यनुवादत्वादात्मन्यौ-

पाधिकमपि कर्तृत्वं नेत्येतन्मतनिराकरणपरत्वाच्च सूत्रस्य नोक्त-दोष इत्यभिप्रेत्य, तर्हि कोऽयं कर्तृत्वादिमानुपाधिरिति वीक्षायाम्, "एतेभ्यो भूतेभ्यः समुत्थाय, प्रकृतेः क्रियमाणानि सर्वशः, प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः इत्यादिवचनात् कार्यकरणसंघाताकार-परिणताविद्यकभूतसंघात् एव कतृत्वादिमानुपाधिरित्याह –

भूतानि पञ्च तव मोहसमुद्भवानि
संघातरूपपरिणाममुपागतानि ।
कुर्वन्ति कर्मफलमश्नुवते च तेषां
साक्षी त्वमन्तरविलुप्तचिदेकरूपः ॥३।६३

ननु स्फटिके लौहित्यवच्चिदात्मनि कर्तृत्वादेरौपाधिकत्वे लोहितद्वयवत् कर्तृद्वयं विविक्तमेकदेहे प्रतीयेत, तथाऽऽलक्तकादौ स्फटिकत्वादिवत् कार्यकरणसंघाते चेतनत्वादि न प्रतीयेतेत्या-शङ्क्य चिच्छायाग्राहिणि संघाते चिदभेदारोपान्नोक्तदोषद्वयमित्यभिप्रेत्य तच्छायाग्राहिणि तदाकारारोपे दृष्टान्तमाह –

क्षीरस्य पूर्णे चषके निरस्तो
मणिर्यथा मारकतो महार्हः ।
क्षीरं समस्तं क्षणमात्रतस्तत्
करोति तच्छायमनूनतेजाः ॥३।६४

दार्ष्टान्तिकमाह –

तथा तमःसम्भवमच्छमन्त–
र्बहिर्जडिम्नाऽन्वितमन्तरात्मा ।
जगच्चिदेकच्छवि चित्स्वरूपः
करोति सान्निध्यवशेन विश्वम् ॥३।६५

ननु "नानात्मानो व्यवस्थात" इत्यक्षपादसूत्रवचनादात्मनि वस्तुतो नानात्वस्य तल्लिङ्गभूतकर्तृत्वादिव्यवस्थाया न्यायतः सिद्धत्वात्

पूर्वोक्तं सर्वमनुपादेयमिति चेन्न, "एको देवः सर्वभूतेषु गूढः" "इन्द्रो मायाभिः पुरूप ईयते" "यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन्" "उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेव-मजोऽयमात्मा" इत्याद्यैकात्म्यपरश्रुतिविरोधान्निर्मूलत्वात् सौत्रस्य हेतो-र्व्यधिकरणसिद्धत्वाच्च तदेव सूत्रं सुगतादिसूत्रवदनुपादेयमित्यभि-प्रेत्य कथं तर्ह्यात्मनि देवमनुष्यतिर्यगादि भेदप्रतिभास इति वीक्षायां तस्या-प्यौपाधिकत्वमुपाधिनिर्देशपुरःसरं सदृष्टान्तमाह –

तान्येव कार्यकरणानि बहुप्रकारं
भेदं च बिभ्रति भवानपि तत्र लग्नः ।
भेदेन भाति जलपात्रनिविष्टमूर्ति–
मार्त्तण्डमण्डलवदन्वयमन्तरेण ॥३।६६

तर्हि चिदात्मनः प्रमातृत्वं स्वाभाविकमन्यस्याचेतनस्य तदसंभ-वादिति शङ्कां निराकुर्वन् सर्वशरीरेष्वात्मभेदस्यौपाधिकतया मिथ्यात्वप्रतिपादनफलं तदैक्यसिद्धिमाह–

अध्यात्ममेवमधिभूतमथाधिदैवं
सूत्रं विराजमपि पश्यसि साक्षिभूतः ।
साक्षित्वकारणमेशषजगन्निदान–
मज्ञानमात्मचिदवज्ज्वलितं सदैव ॥३।६७

ननु प्रमाणजन्यानित्यज्ञानव्यतिरेकेण तदुपाधिकं बोधाकृतिशब्दितं संवेदनमेव नास्ति यस्या निमित्तत्वं नित्यत्वं च स्यादित्याशङ्क्याह –

संवेदनं यदिह मानफलं प्रसिद्धं
तच्च प्रमातरि विकारिणि निष्ठितं नः ।
तस्य प्रमातुरपि साक्षितयाऽन्तरात्मा
सर्वस्य तिष्ठति भवानविकाररूपः ॥३।८०

ननूक्तरूपसाक्षिसद्भावेऽपि न तन्मम स्वरूपम्, अहंप्रत्यये प्रकाशमानस्यैव मत्स्वरूपत्वात्तत्र कर्त्रादिरूपस्यैव प्रकाशमानत्वादित्या-

शङ्क्य वस्तुत उक्तरूपस्यैव तवाहंप्रत्यये विपर्यस्ततयाऽन्यथाप्रकाश-मानत्वात्तद्‌गोचरकर्त्रादिरूपं स्थूलादिरूपवत्तव नैवास्तीत्यभिप्रेत्याह –

कर्त्रादिसंनिधिबलेन तवापि कर्तृ–
भोक्तृप्रमातृवपुरापतति भ्रमेण ।
तद् बुद्धिसंश्रयमनात्मगतं प्रतीचि
शुद्धेऽपि पश्यसि तमःपटलावृताक्षः ॥३।८१

तत्र तावल्लोके मायायास्तमःशब्दिताऽविद्याभेदं साधयितुमुपक्रमते–

लोके हि मायाऽधिगता न माया
तमोऽतिरिक्ताऽस्ति निरूप्यमाणा ।
व्याप्तिश्च शक्तिश्च निरूप्यमाणा
भविष्यतीहैव तु नेतरत्र ॥३।८६

ननु सर्वज्ञेश्वरेऽज्ञत्वप्रयोजकाज्ञानासम्भवात्तस्मिन् श्रुतिस्मृतिप्रसिद्धा माया ततोऽन्यैव जगत्प्रकृतिरूपाऽभ्युपगन्तव्येत्याशङ्क्य चिन्मात्राश्रिताज्ञानस्य तदात्मकेश्वरेसत्त्वेऽपि तस्य तं प्रतिस्वरूपानावरकत्वात्तत्राज्ञत्वाद्यप्रयोजकाज्ञानमेवोक्तमायेत्यभ्युपगन्तुमर्हति, कृतमतिरिक्तमायाकल्पनयेत्यभ्रिप्रेत्य परिहरति –

अज्ञानमेव च भविष्यति शक्तिरेषा
सर्वप्रपञ्चजननी परमेश्वरस्य ।
मायाश्रुतिस्मृतिवचोभिरुदीर्यमाणा
शक्तिग्रहो हि परिविभ्रमहेतुशक्तौ ॥३।९४

मायाशब्दस्य लौकिकाज्ञानार्थत्वे यद्यपि मायां तु प्रकृतिं विद्यादित्यत्र न काचिदनुपत्तिस्तथापि मायिनं तु महेश्वरमित्यत्र साऽस्त्येव सर्वज्ञादिरूपमहेश्वरस्याज्ञानित्वानुपपत्तेरित्याशङ्क्य स्वतः कूटस्थासङ्गाद्वितीयचिद्रूपेश्वरस्य जडप्रपञ्चजननानुकूलशक्तिरूपाज्ञानवत्त्वेऽपि तस्य तं प्रति जीववत्स्वरूपतत्त्वावारकत्वाभावेनेश्वरस्याज्ञत्वादिप्रस-

ङ्गाभावस्यानेकत्र निरूपितत्वात्सर्वज्ञत्वाद्यविरोध्यज्ञानाश्रयत्वे न काचि-
दनुपपत्तिरित्याह –

अज्ञानं जडशक्तिमात्रवपुषा सर्वेश्वरस्येष्यते
सर्वज्ञत्वविरोधि तन्न च भवेदुक्तप्रकारेण नः ।
सर्वज्ञेश्वरसंश्रया भवति सैवाज्ञानमाया श्रुतौ
तस्मादुद्भिदिवेति वर्णनमिदं वैषम्यदुष्टं तव ॥३।९९

एवं मायाऽविद्ययोरभेदं तत्र बाधकाभावं चोपपाद्य तदनुबादेन फलितमाह–

एवं तावल्लोकसिद्धा न माया
मिथ्याज्ञानाद्भिद्यतेऽतश्च तत्र ।
शक्तिव्याप्तिप्रत्ययौ वर्णयित्वा
वेदाल्लिङ्गाच्चान्यमायात्वसिद्धिः ॥ ३।१०४

ननु सर्वत्राज्ञानपदस्थनञा ज्ञानाभाव एवोच्यते। सच परिशेषात्तत्प्राग-भाव एव, माया च भावरूपा कथं तदभिन्ना स्यादित्याशङ्क्य अधर्मा-सुरादिपदानां धर्मादिविरुद्धभावरूपदुरितादिप्रतिपादकत्ववदज्ञानपदस्यापि ज्ञानविरुद्धभावरूपमायाप्रतिपादकत्वोपपत्तेर्मैवमित्याह –

ज्ञानस्य प्रागभावादपरमभिहितं प्रत्यगज्ञानमेत-
त्संसारव्याधिबीजं कथितनवशादेव बुध्यस्व बुध्द्या ।
ज्ञानेनाज्ञाननाशङ्कथयति भगवानेष गीतागतः स–
न्न ज्ञानात् प्रागभावक्षय इति घटते तत्क्षये तत्प्रसूतेः ॥३।१११

जाग्रदवस्थागतस्यापि मृषात्वे तद्गतश्रुतेरपि तथात्वाद्बाष्पधूपादेरिव ततस्तत्त्वबोधो न स्यादित्याशङ्क्य सूचकश्च हि श्रुतेरितिसूत्राभिप्रेतं परिहारमाह –

स्वप्नोपलब्धमखिलं वितथं तथापि
तत्सूचयत्यवितथं परमार्थवस्तु ।

जाग्रद्दशावगतमप्यनृतं तथापि
तद्वत्तदप्यवगतिक्षममेव भूम्नः ॥३।११६

ननु जाग्रत्स्वप्नयोर्मृषात्वे कथं तयो पूर्वोक्तं वैषम्यं भवेत्, यद्यविद्यातिरिक्तनिद्रादिदोषजन्यत्वात्स्वप्नस्य प्रातिभासिकत्वं तद्दोषापगमे बाधश्चोपपद्यते, जागरितस्य तदभावाद्व्यावहारिकत्वमिति वैषम्यमुच्यते, तर्हि यावन्निद्रा तावत्स्वप्न एव स्यादिति सुषुप्तिर्न स्यात्, स्वप्नवैचित्र्यं च न स्यात्तद्धेतोर्निद्राया एकरूपत्वादित्याशङ्क्य स्वप्नस्यापि सुखदुःखपर्यवसायितयाऽदृष्टसाध्यत्वस्यावश्यकत्वात्सत्यामपि निद्रायां तदुपरमे स्वप्नलयात्सुषुप्तिः स्यात्कर्मवैचित्र्याच्च स्वप्नवैचित्र्यमित्याशयेनाह –

स्वप्नभ्रमोऽपि सुकृतादिनिबन्धनत्वा-
त्तावत् परिस्फुरति यावददृष्टमस्ति ।
क्षीणे तु तत्र लयमेति जगन्निदाने
गाढे तमस्यनुभवावगमे प्रतीचः ॥३।११७

नन्वाशुतरविनाशिन्याः पुण्यपापक्रियायाः कालान्तरभाविस्वप्नादिहेतुत्वमेवानुपपन्नं कुतस्तदुपरमात्स्वप्नोपरमइत्याशङ्क्य कदाचित्सुकृतं कर्म कूटस्थमिव तिष्ठतीतिवचनाद्विधिनिषेधशास्त्रसामर्थ्याच्च कारकाश्रितक्रियायास्तत्कारणां च यावत् फलावसानं स्थायिसूक्ष्मरूपं कल्प्यते, नाशशब्दस्याप्यदर्शनवाचिनः सूक्ष्मरूपसत्त्वानुकूलत्वान्न तावता तदसत्त्वापत्तिः । तथा चादृष्टसूक्ष्मरूपेण स्थायिन्याः क्रियायाः शास्त्रावगतस्वप्नादिहेतुत्वादि युक्तमेवेत्याशयेनाह–

निष्पादिता सकलकारकवर्गसाध्या
सर्वेण कारकगणेन सहैव तावत् ।
तिष्ठेत् क्रिया परमसूक्ष्मतयेक्ष्यमाणा
सर्वेश्वरेण पुरुषः फलमेति यावत् ॥३।११८

ननु विचित्रस्वप्नस्य विचित्रवासनावदज्ञानादेवोत्पत्तिसम्भवात्तत्र

कर्मणो नोपयोग इत्याशङ्क्य वासनोद्बोधद्वारा तत्र तदुपयोग इत्या-
बशयेनाह –

स्वप्नश्च जागरितमप्युभयं तवैव
मोहप्रसूतमपि कर्मफलं विभाति।
कर्मक्षये तदखिलं परमात्ममाया-
माश्रित्य सूक्ष्ममवतिष्ठत एव लीनम् ॥३।११९

ननु सुषुप्तावज्ञानमेव नास्ति तत्साधकाभावात्, यत्र लीनं जगत्सूक्ष्मरूपेण तिष्ठेत् न तावत्तत्रेन्द्रियव्यापारोऽस्ति तेषां तदोपरमात्तदधीनलिङ्गादिधीरपि तत्र न सम्भवति। न च साक्षिणैव तत्सिद्धिः, केवलस्य तत्साधकत्वेऽतिप्रसङ्गादित्याशङ्क्य केवलसाक्षिणा तदाऽज्ञानमेवानुभूयते तदान्यस्य तद्योग्यस्याभावादित्यभिप्रेत्याह –

अज्ञानमेव तु तदावगतं त्वदीयं
येनोत्थितो वदसि नावगतं मयाऽद्य।
सुप्तेन किं चिदपि गाढतमस्यभूवं
क्षिप्तः समस्तविषयावगमासमर्थः ॥३।१२१

ननूक्तपरामर्शसामर्थ्यात्सुषुप्तावज्ञानतदनुभवौ चेत् स्तः, तर्हि नाहं तदा किञ्चिदवेदिषमित्यपि परामर्शदर्शनात्तदाहंकारतदनुभवावपि कल्प्येयाताम्। न चैतदिष्टमुपपन्नं वा। तदा सकलकार्यलयाभावाद्विशेषविज्ञानभावाच्च सुषुप्तिभङ्गप्रसङ्गादित्याशङ्क्य तदा सत्संपत्ति–प्रतिपादकवचनविरोधादहंकारस्तदनुभवश्च नैवास्ति, सति संपद्य न विदुरित्यादिवचनादज्ञानमात्रं तत्परामर्शबलात्तन्मात्रानुभवश्चोपेयते, ततो नोक्तदोष इत्याशयेनाह –

स्पष्टानुभूतिविषयो न तमस्तदानी-
मासीदहंकरणहीनतयाऽधुना तु।
निष्पाद्य कार्यमिदमंशमहं न जाने
मूढोऽस्मि चेत्यवगतेर्विषयत्वमागात् ॥३।१२३

किं तदाचार्यैर्विरुद्धवदुक्तं द्वयमिति वीक्षायामाह–

नाज्ञानमस्ति च सुषुप्तिगतस्य पुंसो
गाढे तमस्ययमभूत् पुरुषः सुषुप्तः ।
इत्युच्यमानमविरुद्धतया विविच्य
ग्राह्यं त्वयाऽनुभवयुक्तिनिरूपणेन ।।३।१२५

एवमन्यैरप्याचार्यैरज्ञानपदं विहाय पदान्तरवद्वाक्यैर्मुखतोऽर्थाच्च तदाऽज्ञानाभाव उच्यते, तदपि स्पष्टं तदनुभवाभावादेव न तदभवादित्याह–

एवं तमोऽपि न बभूव सुषुप्तिकाले
भाषान्तरेण पुरुषः पर एव जीवः ।
निर्बीजतामुपगतः स निरन्वयेन
न स्पष्टमत्र तमसोऽनुभवोऽस्ति यस्मात् ।।३।१२६

मयाऽप्येतादृशवाक्यान्युच्यन्ते, न चैतावता मम तदाऽज्ञत्वाभावोऽभिप्रेतः, किं त्वहं न जानामीत्येव स्पष्टमनुभूयमानं विद्यमानमपि तदविद्यमानप्रायं बुद्ध्यादिकार्यराहित्यादिष्टमेवेति ततस्त्वं शुद्ध इत्यादि मदीयमपि वचनं ग्राह्यमित्याशयेनाह–

अज्ञानतज्जमतिहीनतया सुषुप्ते
शुद्धः परोऽसि भगवानसि नित्यमुक्तः ।
कामश्च कर्म सकलं च तदा कुतस्त्यं
चित्सागरेऽनवकरे त्वयि तायमाने ।।३।१२७

ननु सुषुप्तावुक्तरीत्याऽऽत्मनो भवतु शुद्धतादि, नित्यमुक्तता तु न घटते जाग्रत्स्वप्नयोर्विविधदुःखान्यनुभवतस्तदयोगादित्याशङ्क्य तदा दुःखादिबन्धप्रतिभासेऽपि तस्याप्यन्योपाधिकतया स्फटिके लौहित्यवन्मिथ्यात्वात्तत्प्रसञ्जकस्याहंकारादेराविद्यकत्वेन तथात्वाज्जाग्रदादावपि वस्तुतो मुक्तः शुद्धश्च भवत्येवात्मा, सुषुप्तौ तु तत्प्रतिभासस्याभावान्नित्यमुक्तत्वादि तस्य नानुपपन्नमित्यभिप्रेत्याह –

आसीदहंकरणमात्मतमोनिमित्तं
तज्जाग्रतश्च भवतः स्वपतश्च दुःखम् ।
आनीय दर्शयति तन्न सुषुप्तिकाले
बीजक्षयादिति भवानतिनिर्मलोऽभूत् ॥३।१२८

ननु किं तदात्मतमो यदहंकारादिकारणं स्यात्, अज्ञानमेवेति चेन्न । स्वप्रकाशचिद्रूपात्मनि ज्ञानाभावरूपस्य तस्यासंभवात्, तस्याहंकारादिकारणत्वायोगाच्च, अनादिभावरूपं चाज्ञानं मानहीनम्, तस्य निवर्तकानिरूपणेनानिर्मोक्षप्रसङ्गश्चेति तत्राह –

सद्रूपमावरणतानुभवादभीष्ट-
मज्ञानमात्मचिति नैशतमोवदेतत् ।
ज्ञानं दिवाकरवदस्य जडप्रकाश-
रूपं निवर्तकमिति प्रवदन्ति धिराः ॥३।१२९

किञ्च स्वप्रकाशसंविद्वादिभिस्तदुत्पत्त्याद्यङ्गीकुर्वद्भिस्तदुत्पत्तेः प्राक् तदस्फुरणरूपं तदज्ञानमङ्गीक्रियते तद्भावरूवमेव तैरवश्यमभ्युपेयं, संविद्विषयस्य स्वप्रकाशस्य जडरूपस्य वा ज्ञानस्य तन्मतेऽभावेन तदभावरूपज्ञानस्यासम्भवात् । वस्तुतस्तेषां संविदुत्पत्त्यादिभ्रान्तिमूलतयाऽपि तद्गोचरभावरूपज्ञानसिद्धिः, उक्तविधया तन्मते तत्र ज्ञानाभावरूपाज्ञानासम्भवादित्याशयेनाह –

प्रावादुकैरपि तथैव तदेषितव्यं
संवेदनेऽस्फुरणमप्युपयद्भिरग्रे ।
संवेदनं न खलु संविदभावरूप-
मज्ञानमभ्युपगतं न च बुद्ध्यभावः ॥३।१३०

एवमनादिभावरूपाज्ञानमुक्तमेव विस्मरणशीलं प्रत्युपपाद्यास्य जगदुपादानत्वं फलितं वदन्सुषुप्तौ तद्भावाभाववादिश्रुत्याचार्यवचसामविरोधं प्रागुक्तमुपसंहरन्नात्मनो नित्यशुद्धत्वादि फलितमाह –

तस्मादशेषजगदेकनिदानभूत-
मज्ञानमात्मविषयं न विरूद्धमूचुः ।
वेदावसानवचनानि मुनीश्वराश्च
स्थानेषु भूरिषु ततोऽवकरो न कश्चित् ॥३।१३१

एवमज्ञानमस्त्यवगतं च सुषुप्तिकाल इत्यत्रोक्तमज्ञानसत्त्वमुपपाद्य तथापि तदवगतिर्न सम्भवति, तदा अवगन्तुः प्रमातुरभावात् । भावे वा तदुपाधेरहङ्कारस्यापि तदा सत्त्वापत्तेः सुषुप्त्यभावापातात् । न च साक्षिणैतावदवगतमिति वाच्यम् । लोके प्रमातुरेव साक्षित्वावगमात् । विनाऽहङ्कारं कूटस्थासङ्गचैतन्यस्य साक्ष्यसम्बन्धायोगेन साक्षित्वासम्भवाच्चेत्याशङ्क्य सुषुप्तावज्ञानमात्रस्य साक्ष्यत्वात्तत्सम्बन्धस्थानादेरपि चैतन्यस्वभावानुरोधेनाज्ञानमात्रप्रयुक्तत्वोपपत्तेरहङ्कारस्य तत्रानुपयोगादसम्भवाच्चाज्ञानोपहित एव चिदात्मा तदाऽज्ञानसाक्षी तद्द्वाराऽज्ञातवस्तुसाक्षी च, स एव चान्यदहङ्कारेणाप्युपहितोऽहङ्कारतद्धर्मसाक्षी अन्यथाऽतिप्रसङ्गात् । तदुभयोपहित एव मानजनयवृत्तिमपेक्ष्य ज्ञातवस्तुसाक्षी भवतीति प्रमातुः साक्ष्यस्याहङ्कारविशिष्टस्य न क्वापि साक्षित्वमित्याशयेनाह –

साक्षित्वमात्मतमसा मतिकञ्चुकेन
मातृत्वमेतदपि नेह सुषुप्तिकाले ।
यद्धेतुकं भवति यन्न हि तद्विना तत्
सम्भाव्यते न च तदत्र सुषुप्तिकाले ॥३।१३२

ननु सुषुप्तेऽज्ञानं स्वरूपेणास्ति चेत्तर्हि जाग्रत्स्वप्नयोस्तदस्तित्वे विवादाभावाच्चैतन्यवदवस्थात्रयेऽप्यव्यभिचारात्तदात्मस्वभावः स्यात् । ततश्च स्वाभावात्तमसो विवेचने निदर्शनाभावात्ततो विवेकासिद्धावशुद्ध एवात्मा स्यादिति शङ्कते –

एवं सतीह तमसो न विविच्य वस्तु
साक्षान्निवेदयितुमस्ति निदर्शनं चेत् ।

नैतत् परागवतेर्विषयो विभाति
गाढं तमो न तु तथाऽवगतिः प्रतीचि ॥३।१३४

तथापि सुषुप्तौ तयोः स्पष्टं प्रत्यक्पराग्भावेनाननुभवात्तदा तद्विवेचनं दुःशकमित्याशङ्क्योक्तरीत्या जागरितादौ विवेचितानन्यत्वात्तयोस्तत्रापि विवेचनं सुकरमित्याशयेनाह–

प्रत्यक्पराग्विषयवस्तुविवेचनाय
क्लेशो न सम्भवति कस्य चिदत्र जन्तोः ।
दृश्यं तमो घटपटादिवदेष तस्य
द्रष्टा सुषुप्तिभुवि चिद्घनविग्रहोऽभूत् ॥३।१३५

नन्ववस्थावदहङ्कारसम्बन्धादग्निसम्बद्धजलौष्ण्यवच्चिदात्मनोऽप्यवस्थावत्त्वं दुष्परिहरमिति तच्छुद्धिर्दुर्घटेत्याशङ्क्य अहङ्कारतत्संबन्धयोरप्यद्वितीयासङ्गचिदात्मन्यविद्यया कल्पितत्वात्तदभावे च तौ वस्तुतो न स्तः, कुतस्तदधीनाऽशुद्धिरित्यभिप्रेत्याह–

त्वय्येव कल्पितमहंकरणं बिभर्ति
तिस्त्रोऽपि ताः सहितमेव तु तच्च ताभिः ।
त्वच्चित्प्रकाशविषयत्वमुपेत्य भाति
स्वाज्ञानवत्तव न रूपमतश्चतुष्कम् ॥३।१३७

उक्त चतुष्टयस्यात्मनः पृथक्त्वे तस्याद्वयत्वं न स्यात्, स्याच्च साङ्ख्यादिमतानुमतिरित्याशङ्क्याह –

नान्वेति तत्तव चिता व्यतिरेकिता च
दूरे न सम्भवति तस्य चतुष्टयस्य ।
नाभावरूपभजनाय समर्थमेत-
देवं चिदेव तु चतुष्टयमेतदासीत् ॥३।१३८

स्यादेतदेवं यदि जाग्रदादीनां मिथ्यात्वं चैतन्यस्यैव सत्यतया तदधिष्ठानत्वं च स्यात् । न त्वेतदस्ति साधकाभावद्व्यभिचारित्वस्य स्वापमूर्छाद्यवस्थासु चैतन्येऽपि सत्वादित्याशङ्क्य न हि द्रष्टुर्दृष्टेर्वि-

परिलोपो विद्यते इत्यादिश्रुतेः प्रत्यभिज्ञाप्रामाण्याच्च तदापि तदागमापायस्य साक्षिचैतन्यमनुगतमस्त्येव, इतरथा तत्तदवस्थापरामर्शानुपपत्तिः, ततश्च तस्य सत्यत्वाद्व्यभिचार्यवस्थाधिष्ठानत्वं युक्तमित्याशयेनाह –

जाग्रत्स्वप्नसुषुप्तिमूर्छिततनूनिष्क्रान्त्यवस्थासु य–
च्चैतन्यं व्यभिचारिवस्त्वनुगतं तत्सत्यमेवात्मनः ।
यत्किंचिद्व्यभिचारि तन्ननु मृषा स्रक्सर्पदण्डादिव–
न्नानुस्यूतचिदात्मवस्तु वदितुं शक्यं मृषा रज्जुवत् ॥३।१३९

ननु स्रक्सर्पादे रज्जवज्ञानविलसितत्वात्सैव तत्तत्त्वं तद्विपरीतं तु मिथ्येति युक्तम् । नैवमवस्थाधर्मितयोक्तमन्तःकरणमात्माज्ञानविलसितं येनात्मैव तत्त्वं स्यात् तस्यानादित्वात्, अन्यथा तद्गतकर्मतत्फल-प्रवाहस्यानादित्वायोगात् आत्मन्यवस्थात्रयेऽपि साक्षितया भासमाने-ऽज्ञानासंभवाच्च तस्य तद्विलसितत्वायोगादिति तत्राह –

जाग्रत्स्वप्नसुषुप्तिधर्मकमिदं चित्तं त्वदज्ञानतः
प्रादुर्भूतमतस्त्वमेव सततं त्वत्तो न तद्भिद्यते ।
स्वाज्ञानं च तवानुभूतिबलतः सिद्धं मृषा तत्त्वतो
नासीदस्ति भविष्यतीति भवतः पूर्णाचितिः शिष्यते ॥३।१४०

ननु सर्वेऽपि वादिनः स्वस्वमते युक्तिजालं वदन्ति, तावता मम न तत्र श्रद्धा भवति । एवं युक्तिभिरुपपादितायामपि त्वमर्थशुद्धौ सा कथं भवेदित्याशङ्क्य युक्तिमात्रस्याप्रतिष्ठितत्वात्तावता तत्र श्रद्धानुदयो युक्तः इह तु युक्त्युपोद्बलितागमवाक्यैरेव स्पष्टं प्रतिपादनादुक्तत्वमर्थशुद्धौ श्रद्धा विधेयेत्याह –

ज्योतिर्ब्राह्मणवाक्यमानबलतः सम्पूर्णरूपा चिति–
र्जाग्रत्स्वप्नसषुप्तिधर्मरहिता मोक्षाय निश्चीयते ।
तस्मादस्मदुदीरितं स्वकवपुः श्रद्धत्स्व मानं विना
नास्माभिः प्रतिपादिताचितिरियं वाक्यार्थसंबन्धिनी ॥३।१४१

त्वंपदार्थशुद्ध्यर्थमन्यदपि श्रोतव्यमिति मतिं निराकुर्वंस्त-न्निर्णयमुपसंहरति–

एतत्त्वंपदलक्ष्यवस्तु भवता यत् पृष्टमासीत् पुरा
तन्निर्णीतमतोऽन्यदस्ति यदि ते चित्तस्थितं पृच्छ तत् ।
बुद्धिस्थं कुरु पूर्वमुक्तमखिलं यद्वक्ष्यमाणं च तद्
बोद्धुं, धारय ते मनः स्थिरतरं श्रद्धाधनाद्याश्रयः ॥३।१४२

एवं गुरोरनुज्ञां प्राप्य शिष्यो निःशङ्कः सननुदितेऽर्थे जिज्ञासानि-वृत्तिं सूचयन्नापातप्रतिपन्नवस्तुनि जिज्ञासौत्कट्यप्रकटनपुरःसरं तत्पृ-च्छतीत्याह–

इत्युक्ते गुरुणा स पृच्छति पुनस्त्वंशब्दलक्ष्यं मम
ज्ञातं न्यायबलेन पूर्वमुदितावस्थात्रयापोहनात् ।
तच्छब्देन तु लक्ष्यमर्थमधुना बोद्धुं मनो मामकं
धावत्याशु तमप्यपोह्य सकलद्वैतप्रपञ्चं वद ॥३।१४३

आपातप्रतीत्यधीनसंशयकोटिं दर्शयंस्तन्निर्वतकनिर्णयाय विचारा-रम्भः कार्य इत्याह–

किं सप्रपञ्चमिदमस्त्वथ वा समस्त-
द्वैतप्रपञ्चरहितं परिपूर्णरूपम् ।
यद्वोभयात्मकमिदं परमार्थतोऽस्तु
विष्णोः परं पदमितीह विचारणीयम् ॥३।१४४

एवं प्रार्थितो गुरुः "न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि" इत्यादि-सूत्रसूचितन्यायनिर्णीतत्वाद्वस्तुतो निष्प्रपञ्चं ब्रह्म वेदान्तवेद्यमित्युप-पादयति –

न स्थानतोऽप्यस्ति परस्य कश्चिद्
विशेषयोगः परमार्थरूपः ।
स्वतः पुनर्दूरनिरस्त एव
परस्य तत्त्वस्य विशेषयोगः ॥३।१४६

ननु “अन्तस्तद्धर्मोपदेशात्” इत्यादिसूत्रैः सगुणं ब्रह्म निरूपितम्। न च न स्थानतोऽपीत्यनेन विरोधः, सगुणत्वस्यौपाधिकत्वेन तत्परिहारादित्याशङ्क्यौपाधिकस्यापि सत्यत्वे तत्परिहारायोगात्तन्मिथ्यात्वमुपेयमित्याशयेनाह–

स्वभावतश्चिद्घनविग्रहस्य
मृषा ह्युपाधिप्रभवा विशेषाः।
यथा जपापुष्पनिबन्धनः स्यान्
मृषा मणेर्लोहितिमा तथैव ॥३।१४७

नन्वीश्वत्वजीवत्वयोरनादित्वेन स्फटिकलौहित्यवदौपाधिकत्वायोगाद्वास्तवत्वमुपेयम्, ततश्च वस्तुत एवात्मनः सविशेषत्वमित्याशङ्क्याह–

मायोपाधेरद्वयस्येश्वरत्वं
कार्योपाधेजीवता च प्रतीचः।
मिथ्यैव स्याद् बन्धुजीवप्रसून–
संपर्कोत्था रक्ततेवाभ्रकादेः ॥३।१४८

नन्वद्वितीयात्मनि जीवेश्वरत्वादिविशेषस्य मिथ्यात्वेऽपि तस्यौपाधिकत्वं कुतः सिध्येदित्याशङ्क्य तत्र श्रुतिं प्रमाणयति–

यथा ह्ययं ज्योतिरात्मा विवस्वा-
नपो भिन्ना बहुधैकोऽनुगच्छन्।
उपाधिना क्रियते भेदरूपो
देवः क्षेत्रेष्वेवमजोऽयमात्मा ॥३।१५०

तत्र मायाप्रतिबिम्बितमैश्वर्यमन्तर्यामिणस्तन्मते तत्प्रतिबिम्बितचैतन्यस्येश्वरत्वात्, तदैश्वर्यस्येशितव्यापेक्षित्वोत्कृष्टत्वभिन्नत्वानि मायोपाधिकानि, समष्टिव्यष्टिबुद्ध्युपाधिकहिरण्यगर्भाद्यैश्वर्यस्य चोत्पत्तिनाशतारतम्यादि बुद्ध्युपाधिकमित्याशयेन पूर्वपद्यस्य चरमचरणार्थं विभजते –

मायानिविष्टिवपुरीश्वरबोध एष
सर्वेश्वरो भवति सर्वमपेक्षमाणः ।
बुद्धिप्रविष्टवपुरेष तथेश्वरः स्या–
दात्मीयभृत्यजनवर्गमपेक्षमाणः ।।३।१५३

तर्हि निरुपाधिकपरमात्मस्वरूपात्मकैश्वर्यं वृथा, तस्याकिञ्चित्क-रत्वाद् बुद्ध्युपाधिकजीवैः प्राप्तुमशक्यत्वाच्चेत्याशङ्क्य, तादृशपरा-भेदसाक्षात्कारवतो बुद्ध्याद्युपाधिबाधे तत्प्रतिबिम्बितभावरहितस्य प्रति-बिम्बान्तरात्मत्वायोगाद् बिम्बरूपनिरुपाधिकपरमात्मभूतस्य तत्स्वरूप-भूतनिरपेक्षैश्वर्यस्यापि लाभात्स्वाराज्यरूपाप्तकामत्वसिद्धेर्न वृथेत्याह–

सम्यग्ज्ञानध्वस्तसर्वप्रपञ्चः
स्वीये रूपे निर्गुणे निर्विशेषे ।
पूर्णैश्वर्ये स्वप्रकाशस्वभावे
स्वाराज्येऽस्मिन् स स्वराडेव तिष्ठेत् ।।३।१५४

ऐश्वर्यावाप्तिरूपमुक्तेर्ज्ञानलभ्यत्वे श्वेताश्वतरश्रुतिं प्रमाणयति –

ज्ञात्वा देवं सर्वपाशापहानिः
क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः ।
तस्याभिध्यानात्तृतीयं देहभेदं
विश्वैश्वर्यं केवल आप्तकामः ।।३।१५५

सिद्धान्ती सोपाधिकैश्वर्यातिरेकेण निरुपाधिकस्वरूपभूतैश्वर्ये मानाभावादुक्तविभागो न युक्तः, निरपेक्षपरमात्मवस्तुनः सापेक्षैश्वर्यस्व-रूपत्वं चायुक्तम्, अत एव भगवच्छब्दोऽपि मायिकैश्वर्यादिसम्बन्धं निमित्तीकृत्य तत्र वर्तते, यदि मुक्तिदशायामुदितत्वात्तस्य निरुपाधिकत्वं स्वरूपत्वं चास्थीयेत निषेधश्रुतीनां च सोपाधिकस्वरूपविषयत्वं तदाऽतिप्रसङ्ग इत्याशयेन दूषयति–

सामगानमथ जक्षणं जग–

त्सर्जनं च निरुपाधि गृह्यताम् ।

नेतिनेति वचसा निषिध्यते

जक्षणादिकमुपाधिसंश्रयम् ॥३।१६४

यत्तूक्तम् “ऐश्वर्यमस्य परमात्मन उक्तमन्यैः साक्षात् स्वरूपमवबोधसुखादितुल्यम्” इति तत्र दृष्टान्तमुपेत्य दार्ष्टान्तिके वैषम्यं वक्तुं ज्ञाने तावद् द्वैविध्यमुपपादयति –

ज्ञानमस्ति खलु बाह्यगोचरं

निर्विशेषमविनाशि च द्विधा ।

बाह्यगोचरमपोह्य केवला

स्वापमोक्षसमये चितिः स्थिता ॥३।१६६

ननूक्तद्वितीयज्ञाने मानाभावात्प्रतिज्ञामात्रेणोक्तद्वैविध्यादि न सिद्ध्यतीति चेन्न, अहङ्कारतद्धर्मकामसङ्कल्पादीनां धारावाहिकप्रत्ययानां स्वप्नमनोराज्यसुषुप्तीनां च स्वप्रकाशनित्यचैतन्यं विना स्वकाले प्रतिभासायोगात्तेषु च मानप्रवृत्तेरसकृन्निरस्तत्वात्स्वकाले प्रतिभासानङ्गीकारे च तेषां कालान्तरे परामर्शायोगात्तदा तत्साधकं नित्यचैतन्यमावश्यकमित्यभिप्रेत्योक्तज्ञानद्वये वैदिकं प्रति श्रुतिं प्रमाणयति –

पश्यन्न पश्यति गिरा कथयांबभूव

साक्षादनश्वरविनश्वरचिद्विभागम् ।

तात्पर्यतः श्रुतिवचः स्फुटमेव नैव–

मैश्वर्यवस्तुनि विभागवचःश्रुतिर्नः ॥३।१६७

इदानीं सुखदृष्टान्तादपि दार्ष्टान्तिके वैषम्यं वक्तुं ज्ञानवत्सुखद्वैविध्यं प्रामाणिकत्वादुपेयत इत्याह –

एवं न वा अर इति श्रुतमेव तावत्

पुत्राद्युपाधि पुरुषस्य सुखं विनाशि ।

नित्यं निरन्तरमनन्तमपारमुक्तं
ब्राह्मं सुखं वचनकोटिशतैश्च यत्नात् ॥ ३।१६८

साक्षित्वं कारणत्वं च ब्रह्मणः श्रुत्या नैवोक्तमिति वैषम्यमाशङ्क्य तत्र मन्त्रानुदाहरति त्रिभिः–

एको देवः सर्वभूतेषु गूढः
सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः
साक्षी चेता केवलो निर्गुणश्च ॥३।१८३

जीववद्देहद्वयपरिच्छिन्नत्वं वारयति–

न तस्य कार्यं करणं च विद्यते
न तत्समश्चाभ्यधिकश्च दृश्यते ॥
परास्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च ॥३।१८४

तथापि तस्य सर्वेश्वरत्वं सर्वकारणत्वं च कथं, तस्यापि स्वाम्यन्तरादेः संभवादित्याशङ्क्याह–

न तस्य कश्चित् पतिरस्ति लोके
न चेशिता नैव च तस्य लिङ्गम् ।
स कारणं वै करणाधिपाधिपो
न चास्य कश्चिज्जनिता न चाधिपः ॥३।१८५

ईश्वरत्ववत्कारणत्वादेः श्रौतत्वं निगमयति–

इति श्रुतिः कारणसाक्षिभाव–
मैश्वर्यवद् वक्ति परस्य पुंसः ॥
अतत्परत्वान्न तदिष्यते चेद्
द्वयं तृतीयं न तथैषितव्यम् ॥३।१८६

किञ्च किं भिन्नयोरीश्वरेशितव्यभावः, उताभिन्नयोः, भिन्नाभिन्न-योर्वा । नाद्यः, भिन्नस्येश्वरस्य जीवैः सह सम्बन्धानिरूपणेन तस्य तत्प्रेरणादिरूपेशनानुपत्तेः तदभेदश्रुत्यादिविरोधाच्च । न द्वितीयः, अत्यन्ताभिन्नेतद्भावायोगादित्यभिप्रेत्य तृतीयेऽपि पक्षे स्वतोऽभिन्नयो-र्जीवश्वरयोर्भेदः किमौपाधिक उत निरूपाधिकः । आद्येऽपि स किं सत्यो-ऽसत्यो वा, सत्यत्वपक्षेऽपि भेदस्यौपाधिकत्वं किमभेदेनाविरोधायोच्यते तत्सत्यत्वाय वा । नान्त्यः, व्याघातादित्यभिप्रेत्य विरोधायेतिपक्षं दूषयति पादत्रयेण –

अभिन्नता भिन्नतया विरुद्धा
विभिन्नताऽभिन्नतया तथैव ॥
उपाधिभेदे परिकल्पितेऽपि
विना पुनस्तं किमुदीरणीयम् ॥३।१९४

एवमसतः कार्यत्वासम्भवमुक्त्वा तदुत्पत्तेरप्यसंभवमाह –

उत्पत्तिरप्यस्य निरूप्यमाणा
न का चिदागच्छति युक्तिमार्गम् ।
स्वसत्तया स्वैः समावायिकारणै–
रपीह या स्यात् समवायिताऽस्य ॥३।२०१

असज्जनिः सेत्युपवर्ण्यमानं
सुदुर्घटं न ह्यसतो युजैभिः ॥
सदेव सद्भिः सह सर्ववस्तु
सङ्गच्छते न त्वसदेव सद्भि ॥३।२०२।

ननु त्वन्मते सतो ब्रह्मणो सङ्गतया केनापि सम्बन्धाभाववत्तद्वतां च जडानां सत्त्वाभावात्कथं सदेव वस्तु सद्भिः सह सङ्गच्छत इत्युक्तमित्याशङ्क्य परमतेनेदमुक्तमित्यभिप्रेत्य तन्मते सम्बन्धिनः सत्त्वनियमं दर्शयंस्तद्रहितकार्यस्य सम्बन्धासम्भवमाह –

सती हि सत्ताऽस्य पटस्य दृष्टा
तथैव सन्तः पटतन्तवोऽपि।
तथा च तैश्चास्य कथं पटस्य
सम्बन्धिता स्यादसतो वदैतत् ॥३।२०३

किञ्च प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूय इति सूत्र-निर्णीतमूर्त्तामूर्तब्राह्मणतात्पर्यादपि भूतभौतिकतत्तद्वासनात्मकसमस्तप्र-पञ्चनिषेधेनाद्वयचिदानन्दादिरूपाखण्डब्रह्मण एव परमार्थतया निर्धारित-त्वादुक्तपरिणामवादस्तत्त्वतो न ग्राह्य इत्याशयेनाह –

मूर्त्तामूर्त्ततदुत्थलिङ्गपुरुषव्यामिश्रभूता चिति-
वीप्सापूर्वकनेतिनेतिवचनप्रध्वस्तसर्वद्वया।
सम्पूर्णे परमे सुखे परिहृताशेषे शिवे शाश्वते
नित्ये शुद्धमहिम्नि तायिनि परे भूम्न्यक्षरे तिष्ठति ॥३।२३०

ननु सत्यत्वेन प्रसिद्धस्य प्रपञ्चस्य श्रुत्यापि प्रतिषेधो न शक्यः कर्तुं सत्यत्वानुभवविरोधादित्याशङ्क्य स्वतः परतो वा तत्सिद्धेरसम्भवात्स्वतः सिद्धचैतन्ये तादाम्येनाध्यासादेव तथानुभव इत्यभिप्रेत्य प्रकारान्तरेण तत्सिद्ध्यनुपपत्तिमाह–

जगन्महिम्ना न जगत्प्रसिद्धि-
र्न चिन्महिम्नाऽपि जगत्प्रसिद्धः।
न च प्रमाणाज्जगतः प्रसिद्धि-
स्ततोऽस्य मायामयताप्रसिद्धिः ॥३।२३१

इदानीं प्रतिज्ञातान् अर्थात् हेतुभिः साधयति क्रमेण–

जडत्वहेतोर्न जगन्महिम्ना
न चिन्महिम्ना तदसङ्गभावात्।
न च प्रमाणात्तदकारकत्वात्
कृतस्य जाड्यादजडाऽजनेश्च ॥३।२३२

ननु स्वरूपसम्बन्ध एव दृग्दृश्ययोर्विषयविषयिभावनियामक इति चेन्न। तस्य ज्ञानस्वरूपमात्रत्वेऽतिप्रसङ्गः, घटादिरूपज्ञेयविशेषस्वरूपत्वे चान्यस्य तद्विषयत्वं न स्यात्, तस्य ज्ञेयमात्रस्वरूपत्वेऽप्यतिप्रसङ्गस्तुल्यः। अत एव न ज्ञानज्ञेयोभयस्वरूपत्वम्, तथात्वे उक्तदोषापरिहारात्। ननु सम्बन्धान्तरमन्तरेण विशिष्टप्रत्ययविषयत्वमेव स्वरूपसम्बन्ध इति चेन्न। विशिष्ट प्रत्ययत्वस्य सम्बन्धघटित्वेनात्माश्रयत्वापातात्। कञ्च वर्णितविषयत्वं प्रति विशिष्टप्रत्ययो विशेषणमुपलक्षणं वा स्यात्। आद्ये विशिष्टप्रत्ययविशिष्टविषयत्वरूपसम्बन्धावगाहिविशिष्टप्रत्ययस्य विशेषणगोचरत्वमपि स्यात् न च तदुपपद्यते न वा परैस्तदुपेयते, द्वितीये विषयत्वमात्रं स्वरूपसम्बन्ध इत्युक्तं स्यात्, तथा चातिप्रसङ्गोऽपरिहार्यः स्यात्, तसमादाविद्यकानिर्वचनीय स्वरूपसंबन्धादेव वियदादिजडप्रपञ्चस्य चिन्महिम्ना प्रसिद्धिर्वक्तव्येति जडस्य सर्वस्व चिद्विवर्तत्वमावश्यकमित्याह–

ततो वियन्मुख्यमदो जगज्जडं
चिदात्मनोऽस्यैव विवर्त्त इष्यताम्॥
अनाद्यविद्यापटसंवृतात्मन-
स्तदोपलभ्यत्वममुष्य कल्प्यते॥३।२३५

ननु संविदो मानफलत्वेन भेदाभावोत्पत्तिनाशादयोऽनुभूयन्ते ततः सा कथं सर्वाधिष्ठानं स्यात्, वियदादिकं वा कथं तद्विवर्त इत्याशङ्क्य तद्भेदादेरुपाधिपरामर्शं विनानवगमात् स तत्रोपाधिकल्पित एव भ्रान्त्याऽनुभूयते न तु प्रमाणत इति पूर्वमेवोपपादितम्, ततः सैव कूटस्थाऽद्वयादिरूपा सर्वविवर्त्ताधिष्ठानमिति नोक्तदोष इत्यभिप्रेत्याह –

संवितिभेदतदभावतदीयजन्म-
नाशादयो न खलु मानबलेन लभ्याः।
न ह्यस्ति मानमिह किं चन तद् यदस्या
धर्मस्वरूपविषयीकरणे समर्थम्॥३।२३६

कथं तर्हि संविदो मानफलत्वमित्याशङ्क्य निरुपाधिकायाः संविद उक्तविधय कूटस्थत्वादिसिद्धौ तद्विरोधाद्वस्तुतो न मानफलत्वमपीत्याह–

तस्मान्नमानफलता निरूपाधिकस्य
संवेदनस्य घटतेऽविषयत्वहेतोः ।
एवं च मानफलसिद्धिसमन्वयेन
सिद्धिजडस्य जगतो न कदा चिदस्ति ॥३।२३७

ननु सिद्धान्तेऽपि प्रत्यक्चैतन्ये पराचो जडस्य सम्बन्धायोगात्कथं चैतन्यमहिम्ना जडप्रसिद्धिः स्यात्, न चासम्बद्धमेव चैतन्यं तत्साधकमतिप्रसङ्गात्, परोक्षापरोक्षविभागायोगाच्चेत्याशङ्क्य चिज्जडयोः परस्परतादाम्याध्यासोपगमादाध्यासिकसम्बन्धादेवजडं साधयच्चैतन्यं वृत्तिविशेषसंसृष्टविषयाभिव्यक्तंसत्तमपरोक्षतयाऽवाभासयति, केवलतदाकावृत्त्यभिव्यक्तं सत्परोक्षतया तमवभासवतीति न किं चिदस्मन्मतेऽनुपपन्नमित्याशयेनाह –

इतरेतराध्यसनमस्त्वनयो-
रुभयोरतो दृगदृशोरनिशम् ।
अपरस्परव्यतिकरानभवा-
दिह शुक्तिकारजतविभ्रमवत् ॥३।२३८

चिज्जड़योरिरेतराध्यासेऽध्यस्तयोस्तयोर्मिथ्यात्वाच्छून्यमेव तत्त्वं स्यादिति यदि कश्चिदुक्तानुसन्धानचतुरः शङ्कते, तं प्रथमाध्यायोक्तं परिहारं स्मारयति –

संसिद्धा सविलासमोहविषये वस्तुन्यधिष्ठानगी-
र्माधारेऽध्यसनस्य वस्तुनि ततोऽस्थाने महान् संभ्रमः ॥
केषां चिन् महतामनूनतमसां पाण्डित्यगर्वादय-
मन्योन्याध्यसने निरास्पदमिदं शून्यं जगत् स्यादिति ॥३।२३९

किञ्च द्वितीयाध्याये पुरुषबुद्ध्यवस्थाभेदेन जगतः परिणामत्वाद्विविधविवर्तत्वाश्रयणेन ब्रह्माद्वितीयत्वप्रतिपादनादपि न शून्यवादप्रसङ्ग

इत्यभिप्रेत्य तत्रोक्तं लोकश्चतुष्टयमनुवदति–

कृपणमध्यमपक्वधियां नृणां
मतिविलासविधात्रितयं क्रमात् ॥
परिणतिर्बहुजीवतमस्विता
परमपुंसि तमःपरिकल्पना ॥३।२४०

आसां सृष्टीनां विरुद्धविषयाणां नानापुरुषनिष्ठानां कथमद्वितीय-ब्रह्मधीपर्यवसानमित्याशङ्क्यावस्थाभेदमपेक्ष्यैकत्रैव तासां सम्भवस्योक्त-त्वादेषा शङ्का प्रागेव निरस्तेत्याशयेनाह–

पुरुषमेकमपेक्ष्य च भूमिका–
त्रितयमस्ति पुरोदितमेव तत् ॥
तदनुसारवशादखिलश्रुति–
स्मृतिवचांसि वयं घटयामहे ॥३।२४२

तदैक्षत बहु स्यां प्रजायेय सोऽकामयत बहुस्यामित्यादिश्रुतयो वीक्षणपूर्वकं ब्रह्मणो मानसृष्टिमाचक्षाणा मानान्तरापेक्षां मानान्तरापेक्षां वेदसृष्टिं सूचयन्ति, मानं विनेक्षणानुपपत्तेरिति शङ्कते –

श्रुतिवचनमनेकं वक्ति तस्येक्षितृत्वं
मतिमदिति ततस्तन्नेष्यते कस्य हेतोः ।
इति यदि मनुषे तन्मैव मंस्थाः कुतश्चेत्
सकलकरणहीनं ब्रह्म नः शास्ति शास्त्रम् ॥३।२५१

तर्हि तदैक्षतेत्यादिश्रुतिर्निरालम्बना स्यादित्याशङ्क्य साभासमाया-वृत्तिरेव तत्रेक्षणं विवक्षितं नास्मदादेरिव मानाधीना बुद्धिवृत्तिस्तस्य बुद्ध्यादिराहितयोक्तेरित्याह–

चितिगतजडशक्तेराद्य इष्टो विवर्त–
श्चितिनिकटनिवेशाल्लब्धदीप्तिर्जडोऽपि ।
श्रुतिशिरसि निषण्णैरीक्षणं कथ्यते त-
न्न तु परमपदस्यापीक्षणं बुद्धिवृत्तिः ॥३।२५२

एवं वेदस्य ब्रह्मजत्वेऽपि स्वार्थगोचरमानान्तरानधीनत्वाद् ब्रह्मण-स्तदीयस्वरानुपूर्व्यादौ स्वातन्त्र्यभावाच्च निरपेक्षत्वापौरुषेयत्वाभ्यां स्वत एव प्रमाणं वेद इति श्रुत्वोपरते मीमांसके तदसहमानस्तार्किकः प्रत्यवतिष्ठते –

ननु च डित्थडवित्थपदादिवत्
सकलमेव तु सामयिकं पदम् ।
अनुमिमीमहि पूर्वनिदशना-
दनुमितिर्भवतीति किमद्भुतम् ॥३।२५३

न केवलमृग्वेदादिरूपशब्दप्रपञ्चस्यैवामतिपूर्विका सृष्टिः, किं तु इष्टं हुतं प्राशितं पायितमयञ्च लोकः परश्च लोकः सर्वाणि च भूतान्यस्यै-वैतानि सर्वाणि निःश्वसितानीति श्रुतेः सर्वस्यैव कार्यजातस्य जन्मादयः सर्वे विकारा निःश्वासवदमतिपूर्वका एव ततश्च परेषां कार्यालिङ्गानुमान-मपि श्रुतिविरुद्धार्थत्वादप्रमाणमित्याह–

सृजति रक्षति संहरति प्रभुः
सकलमेव निविश्य नियच्छति ॥
अमतिपूर्वमिति श्रुतिशासने
वद कथं मतिपूर्वकताऽनुमा ॥३।२६९

वेदस्याप्तप्रणीत्वाभावे तदुत्थविद्यायाः कथं प्रामाण्यसिद्धिरित्याशङ्क्य किं सिद्धि शब्दोदिता तज्ज्ञप्तिः पर्यनुयुज्यते तत्सत्ता वा नाद्यः, वेदस्यापौरुषेयत्वसाधनेना नाप्तप्रणीतत्वादिनिन्धनाप्रामाण्यशङ्कानवका शात्, तदुत्पन्नविद्या यदा गृह्यते तदा प्रमाणत्वेनैव गृह्यते इति ज्ञानस्य प्रामाण्यज्ञप्तौ स्वतस्त्वसिद्धिरित्याशयेनाह–

तस्मादेषा स्वप्रयुक्तप्रमाण–
भावज्ञाना विदविद्याभ्युपेया ॥
प्रामाण्यं स्यात् स्वप्रयुक्तं च तस्या
वस्तुस्थित्या ज्ञप्तिवन्नान्यतस्तत् ॥३।२७१

एवं वेदोत्थप्रमाया उत्पत्तिज्ञप्त्योः स्वतस्त्वमुक्त्वा तद्वदेव चैतन्याभिव्यक्तिरूपफलेऽपि हेत्वन्तरानपेक्षत्वलक्षणं स्वतस्त्वमाह–

ज्ञप्त्युत्पत्त्योर्यद्वदेव प्रवृत्ता–
वस्या युक्ता मानता स्वप्रयुक्ता ॥
वेदोत्थाया बुद्धिवृत्तेर्न हीय
मुत्पद्यान्यत् संविदे काङ्क्षतीति ॥३।२७२

एवं तत्त्वंपदलक्ष्यशुद्धवस्तुप्रदर्शनाय नामरूपात्मकप्रपञ्चस्य ब्रह्म-विवर्त्तत्वमुक्त्वा तत्प्रसङ्गागतां वेदपौरुषेयत्वशङ्कां निराकृत्येदानीं तत्त्वं-पदवाच्ययोर्हेयोपादेयविभागप्रदर्शनाय पदद्वयवाच्यार्थान्निर्दिशति द्वयेन–

उपाधिमौपाधिकमान्तरं चिद्
आभासनं चित्प्रतिबम्बकं च ॥
चिद्बिम्बमेव चतुरः पदार्थान्
विविच्य जानीहि तदर्थभाजः ॥३।२७५

तथा त्वमर्थेऽपि चतुष्टयन्तद्
विवेचनीयं निपुणेन भूत्वा ॥
मतिश्चिदाभासनमेवमस्यां
बिम्बन्तदीयं प्रतिबिम्बकञ्च ॥३।२७६

तत्पदवाच्यत्वेनोक्तोपाध्यादिचतुष्टयस्वरूपं विशेषतो दर्शयति–

उपाधिरज्ञानमनादिसिद्ध–
मस्मिंश्चिदाभासनमीश्वरत्वम् ॥
तदन्विता चित् प्रतिबिम्बकं स्या–
दुदीर्यते शुद्धचिदेव बिम्बम् ॥ ३।२७७

त्वंपदवाक्यमप्युपाध्यादिचतुष्टयस्वरूपं विशेषेण दर्शयति–

उपाधिरन्तःकरणं त्वमर्थे
जीवत्वमाभासनमत्र तद्वत् ॥

तदन्विता चित् प्रतिबिम्बमेव
मनन्वितां तामिह बिम्बमाहुः ॥३।२७८

एवं पदद्वये वाक्यार्थविभागमुक्तवा तत्र मिथ्याभूतमर्थं विहाय सत्यभूतेऽर्थे पदद्वयञ्जहदजहल्लक्षणया पर्यवस्यतीत्यभिप्रेत्य तद्गतसत्यमिथ्याविभागमाह—

उपाधिना सार्द्धमुपाधिजन्य-
मौपाधिकं सर्वमवेहि मिथ्या ॥
भागं मृषा चित्प्रतिम्बिकेऽपि
बिम्बं पुनः सत्यमशेषमेव ॥३।२७९

तत्वंपदवाच्ययोरुक्तचातुर्विध्यमलौकिकत्वादसम्भवीति शङ्का निराकुर्वन्नुपाध्यादिचतुष्टयं लोकेऽपि प्रसिद्धिमित्याह—

अप्पात्रमप्पात्रगतत्वमेव-
मप्पात्रगोऽप्पात्रगताद् बहिश्च ॥
दिवाकरो दिव्यवतिष्ठमानो
न शक्यतेऽपोहितुमिद्धतेजाः ॥३।२८०

ननु दृष्टत्वादेव दिवाकरे भवतूक्तो विभागः, न तु परमात्मनि, तथा दर्शनाभावादित्याशङ्क्य यथा ह्ययं ज्योतिरात्मा विवस्वान् एक एव हि भूतेभूते व्यवस्थित इत्यादिशास्त्राद् बिम्बप्रतिबिम्बादिदृष्टान्तेनात्मैकत्वप्रतिपादनादुक्तप्रकारेण तदुपपादनीयं न त्वन्यथा कर्तुं शक्यमित्याह—

पुरं पुरस्थत्वमथो पुरस्थं
पुराद् बहिः शुद्धमवस्थितञ्च ॥
तथा परं ब्रह्म सुसूक्ष्मयाऽपि
धिया निराकर्त्तुमशक्यमेव ॥३।२८१

ननूक्तविभागाङ्गीकारे ब्रह्मणो दिवाकरस्येव सद्वयत्वं सविशेषत्वं च स्यादित्याशङ्क्य तत्रोक्तविभागस्यानिर्वचनीयाज्ञानमूलकत्वेन

मिथ्यात्वात्तदपोहेनैव महावाक्यप्रमितशुद्धबिम्बस्वरूपेऽखण्डचिदेकरसे नोपाधितोऽपि विशेषः सम्भावितो दूरस्थ एव स्वाभाविको विशेष इति परिहरन्नुपपादितं निगमयति –

न स्थानतोऽप्यस्ति परस्य तस्माद्
विशेषयोगः परमार्थरूपः ॥
स्वतः पुनर्दूरनिरस्तमेव
परस्य तत्त्वस्य विशेषवत्त्वम् ॥३।२८२

निर्गुणवस्तुबोधादेव परपुरुषार्थलाभात्तदेव वेदान्तगम्यमित्यत्र कठश्रुतिं प्रमाणत्वेनोदाहरति–

अशब्दमस्पर्शमरूपमव्ययं
तथाऽरसं नित्यमगन्धवच्च यत् ॥
अनाद्यनन्तं महतः परं ध्रुवं
निचायनीयं पदमीदृशं हरेः ॥३।२९२

जीवजगदीश्वराणां शुद्धब्रह्ममात्रत्वात्तदेव सत्यमभिप्रेत्य तत्र श्वेताश्वतरमन्त्रमुदाहरति–

भोक्ता भोज्यं प्रेरितारं च मत्वा
सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् ॥
जीवेशानौ सृज्यमानं जगच्च
शुद्धं ब्रह्मेत्याह वेदान्तवाक्यम् ॥३।२९३

ननु ब्रह्मविदाप्नोति परमितिवचनात्तत्पदलक्ष्यसत्यज्ञानानन्दानन्तात्मकब्रह्मबोधादेवसत्यादिवाक्यसिद्धान्मोक्षसंभवात्कृतं तत्त्वमस्यादिवाक्यैरिति तत्राह–

पदार्थबोधेन कृतार्थता न ते
मतिःपरोक्षा हि पदार्थगोचरा।
अतो महावाक्यनिबन्धनैव धी–
रबोधविच्छेदकरी भविष्यति ॥३।२९४

तथापि समानार्थकमहावाक्यबाहुल्यं वृथेत्याशङ्क्य नियमाध्ययनसंस्कृतमहावाक्यस्यैव फलवत्प्रमितिहेतुत्वमिति विशेषज्ञापनाय सर्वशाखासु महावाक्यानि पठ्यन्ते इत्यभिप्रेत्याध्ययननियमसंस्कृतमहावाक्यमेवाप्रतिबद्धसाक्षात्कारहेतुरित्याह–

स्वाध्यायधर्मपठितं निजवेदशाखा
वेदान्तभूमिगतमादरपालितं च ॥
संन्यासिना परदृशा गुरुणोपदिष्टं
साक्षान्महावचनमेव विमुक्तिहेतुः ॥३।२९५

ननु कथं महावाक्यात्तत्त्वसाक्षात्कारोदयः, शब्दस्य परोक्षधीहेतुत्वनियमादित्याशङ्क्य किं मानान्तराधीनस्तत्त्वसाक्षातकार इत्यभिप्रेतमुत महावाक्यात्परोक्षधीमात्रोत्पत्तेस्तत्साक्षात्कार एव नेति विकल्प्याद्यमपवदति –

नावेदविद्धि मनुते पुरुषं बृहन्त-
मित्याह वेदवचनं कथमन्यथैतत् ॥
वाक्यन्तरं च कथमाह पुमांसमेनं
साटोपमौपनिषदत्वविशेषणेन ॥३।२९६

ननु नावेदविदित्यनेन वेदमात्रस्यौपनिषदमित्यनेन चोपनिषन्मात्रस्य ब्रह्मात्मनि प्रामाण्योक्तेः कथं महावचनमेव विमुक्तिहेतुरित्युक्तमित्यशङ्क्य वेदोपनिषत्पदाभ्यां महावाक्यस्यैवाभिधानात्र विरोध इत्याह ।

उपनिषदिति वेद इत्यपीदं
समभिवदन्ति महावचो महान्तः॥
फलवदवगतिः स्यादन्तरेणैतदेकं
वचनमिति न शक्यं वक्तुमित्यादरोऽस्मिन् ॥३।२९७

वृद्धप्रसिद्ध्या वेदोपनिषत्पदयोर्महावाक्यविषयत्वे सिद्धे फलितमाह–

उपनिषदिति शब्दो वेदशब्दश्च तस्मा
च्छ्रुतिशिरसि निविष्टो योज्यतामत्र वाक्ये ॥

अपरमखिलमस्यैवाङ्गभूतत्वहेतो
रिह समभिनिविष्ट तद्गिरो वाच्यमासीत् ॥३।२९८

महावाक्यमेव तत्त्वसाक्षात्कारहेतुरित्यत्र श्रौतं लिङ्गमाह–

पित्रा तत्त्वमसीतिबोधनमनु स्पष्टं विजज्ञाविति
च्छान्दोग्ये यदवोचदेतदिह नो लिङ्गं भवेज् ज्ञापकम् ।
सर्वत्रैव महागिरामुपनिषच्छब्दो भवेद् ग्राहको
वेदश्चायमतोऽन्यदस्य निकटं तेनात्र वेदादिगीः ॥३।२९९

ननु वार्तिककारैरत्र चोपनिषच्छब्दो ब्रह्मविद्यैकगोचर इत्युपक्रम्य उपनीयेममात्मानं ब्रह्मापास्तद्वयं यतः निहन्त्यविद्यां तज्जं च तस्मादुपनिषद्-भवेदित्यादिना ब्रह्मविद्यैवोपनिषत्पदवाच्येत्युक्तत्वात्कथम्महावाक्यं तदर्थ इत्याशङ्क्य तदुक्तमप्यङ्गीकरोति–

उपनिषद्वचसा परमात्मधीः
सहजशक्तिवशेन निगद्यते ॥
तदुपचर्य्य महागिरि वर्त्तते
निकटभावमपेक्ष्य तु मुख्यगीः ॥३।३००

ननु महावाक्यस्यावान्तरवाक्यस्य चोपनिषत्पदवाच्यत्वाभावे समाने कथं तत्रोपनिषत्पदस्य मुख्यामुख्यत्वव्यवस्थेत्याशङ्क्य वाच्या-र्थेन साक्षात्संबद्धे महावाक्ये मुख्यवदुपस्थापकत्वात् तस्य मुख्यत्वव्यप-देशोऽन्यत्र तु तदभावादमुख्यत्वव्यपदेश इत्याशयेन निकटभावमपेक्ष्ये-त्युक्तं विवृणोति–

उपनिषद्वचनाभिहितात्मधी-
निकटवर्त्ति महागिरि मुख्यवत् ।
उपनिषद्ववचनं तदवान्तरे
वचसि गौणवदत्र विवक्ष्यते ॥३।३०१

एवं नावेदवित् तं त्वौपनिषदं पुरुषमिति श्रुतिबलाच्छ्रौतलिङ्गबालाच्च महावाक्यमेव फलवत्प्रमितिहेतुरित्युपपादितमनूद्य फलितं महावाक्य-

वैयर्थ्यचोद्यनिरासं निगमयति–

विना महावाक्यमतो न कश्चित्
पुमांसमद्वैतमवैति जन्तुः ॥
ततः पदार्थावगमात्र मुक्ति-
र्घटिष्यते तस्य परोक्षभावात् ॥३।२०३

ननु तत्त्वमस्यादिमहावाक्यस्यैव मुक्तिहेत्वपरोक्षधीहेतुत्वात्तेनैवालं किं सत्यं ज्ञानमित्याद्यवान्तरवाक्येन परोक्षधीहेतुना, ततस्तदर्थो वृथा निरूपित इति नेत्याह–

पदार्थबोधं परिहृत्य वाक्यं
न शक्तमात्मानुभवावसानाम् ॥
धियं समानेतुमपेक्षितत्वा-
दतः स यत्नेन निरूपितोऽभूत् ॥३।२०४

तथापि तत्त्वंपदाभ्यामेव तदर्थावगतेः कृतमवान्तरवाक्यैरित्याशङ्क्य तन्मात्रेण वाक्यार्थान्वयोग्यार्थासिद्धेस्तदर्थशोधकावान्तरवाक्यापेक्षया ताभ्यां तादृशार्थोपस्थितेर्नावान्तरवाक्यवैयर्थ्यमित्यभिप्रेत्य तद्बलावगतौ पदार्थौ निर्दिशति–

तच्छब्दादवगतमद्वितीयमासीत्
प्रत्यक्त्वं समधितं त्वमित्यनेन ॥
प्रत्यक्त्वं न खलु विना द्वितीयमेवं
नाद्वैतं भवितुमलं विना प्रतीचा ॥३।२०५

नन्ववान्तरवाक्यसिद्धयोः प्रत्यगद्वितीययोरुक्तयुक्त्याऽभेदनिश्चयसम्भवात् किं महावाक्यैरित्याशङ्क्य युक्तः सम्भावनाधीहेतुतया प्रमाणानुग्राहकत्वेन स्वतो निर्विचिकित्सधीहेतुत्वायोगात्तज्जनितधियस्तदभेदगोचरत्वेऽप्यप्रमाणजन्यतया परोक्षत्वात्तदविद्यानिर्वर्त्त्यक्षमत्वाच्च तन्निवर्त्तकनिर्विचिकित्सापरोक्षधीहेतु भूतमहावाक्यानि भवन्ति तावदर्थवन्तीत्याशयेन यौक्तिकप्रतीतितो वाक्यजाऽनुभवस्य विशेषमाह–

तर्कप्रतीतिसमयेऽपि तदद्वितीयं
प्रत्यक् परिस्फुरति तत्प्रतिबिम्बितं सत् ॥
वेदान्तवाक्यजनिताद्वयबुद्धिभूमि–
निष्ठं पुनः स्फुटतरं भवतीति भेदः ॥३।३०६

कर्मवद्ब्रह्मणोऽपि सर्ववेदान्तप्रत्ययत्वात्तेषु वेदान्तेषु सगुणनिर्गुण-परत्वविभागं कृत्वा निर्गुणपरेषु तेष्वानन्दादयः प्रधानस्येत्यादिनोक्त-न्यायात्स्वशाखागतनिर्गुणवाक्येष्वश्रूयमाणान् परशाखागतेषु तेषुतेषु श्रूयमाणानन्दनित्यसर्वगतविभुपूर्णामृताभयसर्वज्ञेश्वरान्तर्याम्यादिशब्दान् स्वशाखागतसत्यज्ञानानन्तादिवाक्येषूपसंहरंस्तदियत्तां स्वयमेव ज्ञास्य-सीत्याहचार्यः–

सकलवेदाशिरःसु परात्मधी-
परवचःसु परापरबोधतः॥
अपुनरुक्तपदान्युपसंहरन्
परिमितिं स्वयमेव तु वेत्स्यसि ॥३।३१३

ननु यत् सत्यादिवाक्यावगतं वस्तु तदेव किमुपसंहृतानन्दादिपद-समभिव्याहारात् प्रतीयते किं वा ततोर्थान्तरमपि, आद्ये तदुपसंहारवै-यर्थ्यम्, द्वितीयेत्वखण्डार्थत्वं तस्य न स्यात्, उपसंहृतपदार्थ-वैशिष्टयस्य ततः प्रतीतेरित्याशङ्क्याह–

अपुनरुक्तपदानि विना यतो
न परिपुष्कलबुद्धिसमुद्भवः ।
अपुनरुक्तपदानि ततस्तत
स्त्वमुपसंहर तत्त्वबुभुत्सया ॥३।३१४

नन्वेवं सति भाववस्तुपरप्रकरणे तस्य प्रियमेव शिरः मोदो दक्षिणः पक्षः प्रमोद उत्तरः पक्षः, आनन्द आत्मेति प्रियादीनां शिरआद्यवयवात्मत्वश्रुते-स्तेषामप्यन्यशाखागतब्रह्मवाक्येषूपसंहारः स्यादित्याशङ्क्य तन्निवारणाय मुख्यामुख्यब्रह्मवाक्यविवेकं कृत्वा तत्र मुख्यब्रह्मवाक्यगतपदानामे-

वोपसंहारः कार्य इति तावदाह–

कुरु परापरवाक्यविवेचनं
तदनु शब्दसमाहरणं कुरु ॥
प्रियशिरः प्रभृतीनि च यत्नवा-
नुपचितापचितानि परित्यज ॥३।३१५

तेषामुपचितादरूपत्वेऽपि ब्रह्मधर्मत्वं किं न स्यादित्याशङ्कामुप-चयापचयौ हि भेद इति सूत्रावयवावष्टम्भेन परिहरति–

उपचितापचितानि न निर्गुणे
प्रियशिरः प्रभृतीनि कदाचन ॥
निपुणधीरपि कश्चन योजये-
दपि तु कोशगुणाः कथिता ह्यमी ॥३।३१६

निरूपितमुपसंहरन् वक्ष्यमाणं प्रस्तौति–

इति वचःपरिमाणमुदीरितं
विधिवचःसु निषेधगिरां शृणु ॥
बहु निषेध्यममूष्वपि तेन ता-
स्वपि समाहर पूर्ववदेव तत् ॥३।३१७

निषेध्योपसंहारो वृथेत्याशङ्क्य तदुक्त्यभिप्रेतं विवृणोति–

अपुनरुक्तनिषेध्यनिषेधकृ
द्बहुपदहरणं कुरु तास्वपि ॥
यदि पुनर्न समाहरणं भवेत्
परिमितप्रतिषेधनमापतेत् ॥३।३१८

ननु सत्यादिवाक्यस्थपदानामप्यनृतादिव्यावृत्तिधीहेतुत्वात् स्थूला-दिनिषेधवाक्यस्थपदानामपि निर्विशेषवस्तुबोधित्वात्कुतो विधिनिषेध-विभाग इत्याशङ्क्य विधिवाक्यस्थपदानां साक्षाल्लक्षितभावरूपस्वार्थ-समर्पणमर्थात्तद्विरोधिकल्पितरूपव्यावर्त्तनं चेतिकृत्यद्वयमस्ति निषेध-वाच्यस्थपदानां तन्नेति वैषम्यात्तद्विभागोपपत्तिरित्यभिप्रेत्याह–

विधिवचस्युभयं तु पदे पदे
भवति संग्रहवर्जनरूपकम् ॥
स्वकवपुः परिकल्पितरूपयो
र्न तु निषेधवचःसु तथा मतम् ॥३।३१९

चतुर्थचरणार्थमेव विवृणोति–
यदिह किञ्चिदबोधसमुद्भवं
तदखिलं प्रतिषेधति केवलम् ॥
न तु किमप्युपगृह्य परे पदे
भगवतो निविशेत निषेधगीः ॥३।३२०

सर्वेषां निषेधपदानामेकवाक्यत्वमापन्नानां दृश्यमात्रनिषेधपराणामजहल्लक्षणया श्रुताश्रुतविषयत्वं विधिपदानां तु श्रुतार्थमात्रस्वरूपं समर्पयतां तदभाव इति वैषम्यान्तरमाह द्वयेन–
श्रुतपदैरुपसंहृतिशालिभि-
र्यदवशिष्टनिषेध्यनिषेधनम् ॥
तदपि पूर्वमिहाभिमतं श्रुतेः
श्रुतपदान्युपलक्षणमेव हि ॥३।३२२
सम्यग्ज्ञानसमीपदूरभवयोर्हेत्वोर्विवेकज्ञतेत्युक्तचतुर्थपादार्थंप्रपञ्चयितुं तद्विषयप्रश्नमवतारयति–
अन्तरङ्गबहिरङ्गसाधने
भेदतः कथय तद्बभुत्सितम् ।
ज्ञानजन्मन इदं जिघृक्षितं
हेयमेतदिति चोपपत्तिभिः ॥३।३२७

किं त्वया कार्यत्वेन साधनमवगतमिति वीक्षायां तदेव विशदयति–
अन्तरङ्गमपवर्गकाङ्क्षिभिः
कार्यमेव यतिभिः प्रयत्नतः ।

त्याज्यमेव बहिरङ्गसाधनं
यत्नतः पतनभीरुभिर्भवेत् ॥३।३२८

वैदिकीं शब्दशक्तिमनुसृत्यैतद्विवृण्वन् लक्षणभेदेन पृष्टं साधनभेदं दर्शयति–

यच्छ्रुतं विविदिषोदयाय तत्
सर्वमेव बहिरङ्गसाधनम् ।
अन्तरङ्गमवगच्छ तत् पुन-
र्यत् परावगतिसाधनं श्रुतम् ॥३।३३०

विविदिषावाक्येन सर्वेषामपि कर्मणां संयोगपृथक्त्वेन विविदिषा-साधनत्वं विधीयते इति मते तयोर्लक्षाणान्तरं वदन् बहिरङ्गत्वादि स्पष्टयति–

यद्धि कारकतयाऽवगम्यते
दूरतस्तदिह साधनं धियः ।
अन्तरङ्गमखिलं तु तत् पुन-
र्व्यञ्जकं भवति यत् परात्मनः ॥३।३३१

एवमन्तरङ्गबहिरङ्गविवेकमुक्त्वा यतिभिरन्तरङ्गमवश्यं कार्यं बहिर-ङ्गन्तु त्याज्यमिति तद्विपक्षबाधमुखेनोपपादयति ।

कारकस्य करणेन तत्क्षणाद्
भिक्षुरेष पतितो भवेद्यथा ।
व्यञ्जकस्य परिवर्जनात्तथा
सद्य एव पतितो भवेदसौ ॥३।३३२

ननु वेदान्तविज्ञानसुनिश्चितार्था इत्यादिवचनादात्मतत्त्वनिश्चये वेदान्तानां हेतुत्वावगमात्तेषां चाकर्त्तव्यत्वात्स्वतः प्रमाणत्वाच्चेति-कर्त्तव्यानपेक्षत्वाद्यज्ञादीनां शमादिसहितश्रवणादीनां च तद्धेतुकधी-साधनत्वमेव नास्ति तत्र कुतोऽन्तरङ्गत्वादिविभागसिद्धिरित्याशङ्क्य

सत्यं वेदान्तवाक्यमेव निरपेक्षं तत्कारणं तथाऽपि प्रतिबन्धनिरासितया एतेषामपि तत्रोपयोगात्साधनत्वादिव्यपदेश इत्याह–

वेदान्तवाक्यमिह कारणमात्मबोधे
हेत्वन्तराणि परिपन्थिनिबर्हणानि ।
यज्ञादिकानि दुरितं क्षपयन्ति बुद्धे–
स्त्वत्त्वं पदार्थविषयं तम उत्तराणि ॥३।३४१

नन्वज्ञानमेकमेव तच्च शुद्धप्रत्यगभिन्नाद्वितीयब्रह्मगोचरं वाक्यार्थ-बोधादेव च तन्निवृत्तिरिति प्रागुक्तम्, तच्च तत्त्वंपदार्थाज्ञाननिवृत्तिः श्रवणादिसाध्येत्येतदयुक्तमित्याशङ्क्य नानाऽविद्याल्पमन्दप्रज्ञजनदृष्ट्यज-नदृष्ट्यनुरोधेनेदमुक्तम्, वस्तुतस्त्वविद्या पूर्णब्रह्मगोचरेकैव तन्निवर्त्तिका विद्याऽप्येकैवेति प्रकृष्टप्रज्ञानां संमतमित्याह–

तत्त्वंपदार्थविषयं तम इत्यपीद-
मर्वागवस्थजनदृष्टिमपेक्ष्य गीतम् ।
अज्ञानमुत्तमदृशां पुनरेकमेव
संसारमूलमपवर्गफला च विद्या ॥३।३४२

किं तर्ह्यस्मिन्मते श्रवणादिकृत्यमित्याशङ्क्याह–

अज्ञानसंशयविपर्ययरूपकाणि
ब्रह्मात्मबुद्धिजननप्रतिबन्धकानि ।
तत्त्वंपदार्थविषयाणि निवर्त्तयन्ति
ह्यावृत्तिमन्ति मननश्रवणादिकानि ॥३।३४३

श्रवणादेरुक्तप्रतिबन्धनिवर्तकत्वयोग्यतामर्थाज्ज्ञापयंस्तत्स्वरूपमा-हसार्द्धेन–

शब्दशक्तिविषयं निरूपणं
युक्तितः श्रवणमुच्यते बुधैः ।
वस्तुवृत्तविषयं निरूपणं
युक्तितो मननमित्युदीर्यते ॥३।३४४

निदिध्यासस्वरूपमाह–

चेतसस्तु चितिमात्रशेषता
ध्यानमित्यभिवदन्ति वैदिकाः ।
अन्तरङ्गमिदमित्थमीरितं
तत् कुरुष्व परमात्मबुद्धये ॥३।३४५

पूर्वं श्रवणादिवदनुष्ठेयं निदिध्यासनपदाभिधेयमुक्तमिदानीं वार्तिककारैरुक्तमर्थान्तरमाह–

श्रवणमननबुद्ध्योर्जातयोर्यत् फलं त
न्निपुणमतिभिरुच्चैरुच्यते दर्शनाय ।
अनुभवनविहीनायैवमेवेतिबुद्धिः
श्रुतमननसमाप्तौ तन्निदिध्यासनं हि ॥३।३४६

तथापि ओमित्येवं ध्यायथ आत्मानं तस्याभिध्यानाद्योजनादित्यदिश्रुत्या ध्यानमप्यात्मसक्षात्कारायानुष्ठेयमित्यभिप्रेत्य वेदान्तवाक्यमिह कारणमात्मबोध इत्यादिनोक्तमुपसंहरति–

पूर्वाण्यदृष्टपरिपन्थिनिबर्हणानि
दृष्टं हरन्ति च विरोधिनमुत्तराणि ।
वाक्यं निरस्तसकलप्रतिबन्धकं स-
दात्मानमद्वयमखण्डमबुद्धमाह ॥३।३४७

ननु यज्ञाद्यनुष्ठितवतामपि केषांचिद्विविदिषा न जायते ततश्च व्यभिचारात्सा न तत्साध्येत्याशङ्क्याह–

यज्ञादिक्षपितसमस्तकल्मषाणां
पुत्रादित्रयगतसङ्गवर्जितानाम् ।
संशुद्धे पदयुगलार्थतत्त्वमार्गे
प्रायेणोद्भवति हि जन्मनीह विद्या ॥३।३४८

कर्मणामीश्वरेऽर्पितानां चित्तशुद्ध्यादिद्वारा ज्ञानहेतुत्वमित्यत्र मानमाह—

भगवाननादिनिधनः कृपया
हरिरेतदाह जगदेकहितः ।
सकलं समर्प्य मयि युक्तमनाः
कुरु कर्म शुद्धिकरमित्यसकृत् ॥३।३५४

एवं बहिरङ्गसाधनस्य यज्ञादेः स्वतो बन्धहेतोरपि विविदिषायां पर्यवसानायेश्वरार्पणबुध्द्यानुष्ठानं कार्यमित्युक्तम्, इदानीमन्तरङ्गसाधनस्य तत्त्वधीजननाय न तदपेक्षेति युक्तितो दर्शयति ।

यदिह साधनमात्मधियः श्रुतं
न च फलान्तरहेतुतया श्रुतम् ।
शमदमादिकमत्र तु कौशलं
किमपि काङ्क्षितमस्ति न सिद्धये ॥३।३५७

संक्षेपविस्तराभ्यामुक्तमध्यायार्थमुपसंहरति—

उक्तं साधनजातमत्र सकलं विद्यासमुत्पत्तये
यस्मिन् कर्मणि वैदिकेन विधिना नुन्नः परिव्राजकः ।
कर्तृत्वाद्युपमर्दनेन भवता विद्यानुकूलात्मना
कर्त्तव्यं तदशेषतस्तदनु ते विद्या विपाकं ब्रजेत् ॥३।३५८

ननु श्रवणादावन्तरङ्गसाधने प्रवाजकश्चेदधिकारी तर्ह्यन्येषां गृहस्थादीनां तत्र प्रवृत्तिर्न स्यात्तत्र तेषामधिकाराभावेन तदधीनफलभाक्त्वायोगादित्याशङ्क्य श्रवणादेर्दृष्टफलत्वाद् दृष्टमफले च कर्मणि सति सामर्थ्ये प्रतिषेधाभावे च सत्यधिकारस्य निरपवादत्वाद् गृहस्थादीनामप्यावश्यककर्मकालावषिष्टसमयेषु श्रवणाद्यनुष्ठानसम्भवात् शूद्रो यज्ञेऽनवक्लृप्त इतिवत्प्रतिषेधाभावाच्च तेषामपि तत्राधिकारोऽस्त्येव परं तु तेषां न तस्मिन् जन्मनि परिपक्वज्ञानं ततो भवति किं तु जन्मान्तर इत्याह—

वानप्रस्थगृहस्थनैष्ठिकजनैरन्यैश्च वर्णाश्रमैः
कर्मव्यध्वनिषेवितं भवति वै जन्मान्तरे पाचकम् ।
विद्यायाः श्रवणादिलक्षणमिदं नह्यतदेषां क्वचित्
शास्त्रेण प्रतिषिद्धमीक्षिमिदं शूद्रस्य दृष्टं यथा ॥३।३५९

ननु गृहस्थादीनामपि श्रवणादावधिकारोऽस्ति चेत्कथं तज्जन्मान्तरे पाचकमित्युक्तम् । दृष्टफले तस्मिंस्तदयोगादितरथा परिव्राजकानुष्ठितश्रवणादेरपि तथात्वापातादित्याशङ्क्याह–

सर्वश्रुतिस्मृतिवचोभिरयं परिव्राड्
मुण्डः शुचिः परमहंस इति प्रसिद्धः ।
ज्ञानाय साधनधनेषु नियुज्यमानः
प्रायेण बुद्धिपरिपाकमवाप्स्यतीह ॥३।३६०

ननु मनुष्याणामेव जनकादीनामाश्रमान्तरे वर्त्तमानानामेव मोक्षहेतुबोधोदय इतिहासपुराणादिषु प्रतिपाद्यते ततश्च कथं संन्यासस्य ज्ञानपरिपाकाङ्गत्वं कथं वा गृहस्थादीनां सत्यपि श्रवणादौ तस्मिन् जन्मनि तत्त्वसाक्षात्कारानुदयनियम इत्याशङ्क्याह–

जन्मान्तरेषु यदि साधनजातमासीत्
संन्यासपूर्वकमिदं श्रवणादिरूपम् ।
विद्यामवाप्स्यति जनः सकलोऽपि यत्र
तत्राश्रमादिषु वसन्न निवारयामः ॥३।३६१

सर्वश्रुतिस्मृतिवचोभिरित्युक्तानि संन्यासस्य ज्ञानाङ्गत्वविषयाणि वचनानि दर्शयति–

वेदान्तविज्ञानसुनिश्चितार्थाः
संन्यासयोगाद्यतयः शुद्धसत्त्वाः ।
ते ब्रह्मलोकेषु परान्तकाले
परामृताः परिमुच्यन्ति सर्वे ॥३।३६२

नैतादृशं ब्राह्मणस्यास्ति वित्तं
यथैकता समता सत्यता च ।
शीलं स्थितिर्दण्डनिधानमार्जवं
ततस्ततश्चोपरमः क्रियाभ्यः ॥३।३६३

यतोयतो निवर्त्तते ततस्ततो विमुच्यते ।
निवर्त्तनाद्धि सर्वतो न वेत्ति दुःखमण्वपि ॥३।३६४

किं ते धनेन किमु बन्धुभिरेव वा ते
किं ते दारैर्ब्राह्मण यो मरिष्यसि ।
आत्मानमन्विच्छ गुहां प्रविष्ट
पितामहास्ते क्व गताः पिता च ॥३।३६५

अन्तरङ्गबहिरङ्गौ साक्षात् तथाऽतिरिक्तकः ।
कथितानि ह्यनेकानि साधनानि सुयत्नतः ॥

इति सङ्क्षेपशारीरकसारसङ्ग्रहस्तृतीयोऽध्यायः ।

# सङ्क्षेपशारीरकसारसङ्ग्रहः
## चतुर्थोऽध्यायः

फलनाम्नि चतुर्थेऽस्मिन् कैवल्यमुक्तिरुच्यते ।
मुक्तानाम्पुनरावृत्तिर्न भविष्यति कर्हिचित् ॥

साधने ज्ञानस्वरूपे विषयनिरूपणेन करणनिरूपणेन च त्रिभिरध्यायैर्निरूपितेऽनन्तरं तत्फलमोक्षरूपविचारः प्रस्तूयते, तत्र यद्यपि फलमनित्यं स्वर्गादि कर्मजमुपासनाजं च हेयमेव कैवल्ये तु धीफलं नित्यमात्मस्वरूपमानन्दधनविद्यातिरोधाननिवृत्तिमात्रेणोपादेयमेवेति प्रथम एव सूत्रे विनिर्णीतम्, तथापि ज्ञानफले मोक्षे वादिविप्रतिपत्तेः संदिहानस्य शिष्यस्य स्वरूपतः साधनतश्च तदवन्तरविशेषे निर्णयं गुरुमुखेन तत्तद्वादिविप्रतिपत्तिनिरासेन द्रढयितुकामस्य प्रश्नमवतारयति–

उक्तसाधनसमुद्भवा सती
किं प्रयच्छति फलं मुमुक्षवे ।
प्रत्यगात्ममतिरत्र मे मन-
स्यर्थिता समुपजायतेऽधुना ॥४।१

ब्रह्मविद्यायाः कर्मानङ्गत्वेन मोक्षसाधत्वेऽपि सा किं पापक्षयकामस्य सेतुदृष्टिरिवादृष्टद्वारेण सहायान्तरसापेक्षा तं साधयति, किं वा रज्ज्वां सर्पतया गृहीतायां दोषापायेन रज्जुदृष्टिरिवाधिष्ठानाज्ञानिवृत्तिद्वारेण दृष्टेनैवाज्ञानोपादानां भ्रान्तिं निवर्त्तयन्ती तं साधयतीति संदिहानस्य प्रश्नान्तरमवतारयति–

किं निरस्तसहकारकारणा
केवलैव फलमर्पयेन् मतिः ॥
बाह्यसाधनसहायसम्पदा
वाऽन्विता फलविधायिनी भवेत् ॥४।२

एवं साधनविशेषगतं संशयमुपन्यस्य तन्निरासाय स्वप्रयत्नं ज्ञापयन् गुरुं प्रार्थयते –

एतदप्यहमवैतुमुत्सहे
निर्णयं कुरु कृपाविधेयधीः ॥
एतदेव हि दयालुलक्षणं
यद्विनेयजनबुद्धिवर्द्धनम् ॥४।३

एवं स्तुतिपूर्वकप्रश्नेन परितुष्टः प्रश्नद्वयस्याप्युत्तरं गुरुः प्रतिजानीते–

उच्यते न तमसो निवृत्तितः
किं चिदस्ति परमात्मधीफलम् ॥
अन्यदल्पमपि साधनान्तरं
न व्यपेक्ष्य फलदायिनी च धीः ॥४।४

ज्ञानस्याविद्यानिवृत्तिरेव फलं तत्र च न कर्मादिसहकार्यपेक्षेत्युभयत्रार्थे स्वानुभवमनुमानं च प्रमाणयितुं दृष्टान्तमाह–

शुक्तिकाविषयबुद्धिजन्मनः
शुक्तिकागततमोनिवृत्तितः ॥
नापरं किमपि दृश्यते फलं
नापरं च सहकारि कारणम् ॥४।५

एवं व्याप्तौ सिद्धायां शुक्तिविद्यादृष्टान्तेनात्मविद्यायामपि तदुभयमनुमीयत इत्याह–

एवमात्मनि तमोनिवृत्तितो
नान्यदस्ति परमात्मधीफलम् ॥
नाप्यपेक्ष्य सहकारि कारणम्
किं चिदात्ममतिरर्पयेत् फलम् ॥ ४।६

ननु तत्त्वमतित्वं तत्त्वविषयकमनःपरिणामत्वम्, सर्वेषां च मनःपरिणामानामात्मचैतन्यक्रोडीकारणे तत्त्वविषयत्वाव्यभिचारान्मतित्वमात्रं हेतुः, स चासौ वाव लोको गौतमाग्निरित्यादिवाक्योत्थमतावुपासनरूपायां

व्यभिचारी, तस्या आवर्त्यमानाया देवयानेन पथा कार्यब्रह्मलोकप्राप्ति हेतुत्वेनाज्ञानानिवर्त्तकत्वादावृत्तिसापेक्षत्वाच्च । न च प्रमितित्वं हेतु-स्तथा च न व्यभिचार इति वाच्यम् । तद्धि अज्ञाननिवर्तकवृत्तित्वं वा प्रमाणकरणवृत्तित्वं वा आद्ये साध्याविशेषादसिद्धिः । द्वितीये तु लोकाग्न्यादिबुद्धौ वेदकरणिकायां व्यभिचारः । किञ्च ब्रह्मविद्या नाज्ञाननिवृत्तिफला शास्त्रीयविद्यात्वात् लोकाग्निविद्यावदितिप्रतिरोधः शुक्त्यादिविद्यायां च शास्त्रीयत्वाभावान्न व्यभिचारः । न च प्रमात्वाभाव उपाधिः । तस्यापि तेनैव हेतुना पक्षे साधनात् । शास्त्रीयविद्यानां सर्वा-सामपि शाण्डिल्यदहरादिसमाख्यानां प्रमात्वाभावनियमात् । तथा ब्रह्मविद्याऽर्चिरादिमार्गप्राप्तिपूर्वकैश्वर्यफला शास्त्रीयविद्यात्वात्पञ्चाग्नि-विद्यावदित्यनुमानबाधश्च । तस्मान्नोक्तसिद्धिरित्याशङ्क्य लोकाग्न्या-दिविद्यातो ब्रह्मविद्याया वैलक्षण्यप्रतिपादनेन समाधत्ते–

ब्रह्मज्ञानं प्रमाणं भवति दृढमिदं नात्र कश्चिद्विवादो
ब्रह्मात्मा चैकरूपो न च बहुरसकस्तत्परत्वाच्छ्रुतीनाम् ॥
एवं सत्यद्वयात्मप्रमितिफलमिह द्वैतमूलापनुत्ति-
न्नैह्यज्ञानापनुत्तेरधिकमपि फलं किञ्चिदस्ति प्रमाणात् ॥४।७

किञ्च स्वर्गपितृलोकादिफलमनपेक्ष्यैवानुष्ठितं परमेश्वरे च समर्पितमत एव तत्फलात्प्रचलितं यद्विशिष्टं शास्त्रीयं कर्म तत्किं ब्रह्मधिया मोक्षायापेक्ष्यत इत्युच्यते किं वा तदतिरिक्तमिति विकल्प्याद्यं यज्ञेन विविदिषन्ति कषायपक्तिः कर्माणि, सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यत इत्यादिवचनविरोधेन निराकुर्वन् कैमुतिकन्यायेन द्वितीयमपि निकारोति–

निरभिसंधिसमर्पितमच्युते
विहितमिष्टफलादपि निर्गतम् ॥
यद्यपि कर्म तदप्यवधीरितं
यदि धिया न तया परमर्थ्यते ॥४।८

ज्ञानकर्मणोः षड्यागवत्समप्राधन्येन मोक्षसाधनत्वेन समुच्चय इत्येकः पक्षः, तत्र कर्मैव प्रधानं ज्ञानं गुणभूतं प्रयाजाज्यावेक्षणादिवदित्यपरः पक्षः, ज्ञानमेव प्रधानं कर्म गुणभूतं सेतुदर्शनादिवदित्यन्यः पक्षः, स सर्वोऽप्यसंभवीति प्रतिजानीते –

समविषमसमुच्चयो न युक्तो
न हि जगदस्ति धियः प्रसूतिकाले ॥
क्व नु बत विहितः क्रियासमूहः
कथमिव तत्र समुच्चयोपपत्तिः ॥४।९

किञ्च बहिरङ्गसाधनानि परित्यक्तवन्तः परमहंसस्यैवान्तरङ्गसाधनैरविद्यानिवर्त्तकविद्योदयस्य श्रुतिन्यायाभ्यामुपपादितत्वात्त्यक्तसर्वैषणस्य च तस्याग्निहोत्रादिकर्मासंभवात्तस्य मोक्षसाधनत्वसमभावनैव नास्ति तत्र ज्ञानेन समुच्चयस्तु दूरापास्त इत्याशयेनाह–

अपि च परमहंसस्त्यक्तसर्वैषणः स-
न्ननुभवफलविद्यां ससाधनैर्यद्यवाप ॥
कथमिव पुनरत्र प्राप्तिरस्ति क्रियाया
भवतु तदपवर्गो विद्ययैवैकयाऽस्य ॥४।१०

ननु सर्वत्र शास्त्रीयज्ञानस्याज्यावेक्षणादेः पुरुषार्थहेतुभूतकर्माङ्गसंस्कारतया तदङ्गत्वदर्शनादात्मज्ञानस्यापि शास्त्रीयस्य तथैव तादृशकर्माङ्गत्वमेव कल्पयितुमुचितम्, ततश्च संस्कारकर्मफलश्रुतेरर्थवादत्वात्तस्य मोक्षहेतुत्वमेव नास्ति कुतस्तस्य नैरपेक्ष्यमित्याशङ्क्यात्मज्ञानस्य कर्माङ्गत्वावेदकप्रमाणाभावान्नैवमित्याह–

यस्य प्रयोगविधिरस्ति परिग्रहीता
द्वारैदमर्थ्यविनिवेदकमस्य सर्वम् ॥
श्रुत्यादि मानमिह नास्ति तदात्मबुद्धौ
तस्मादियं भवतु न पुरुषार्थभूता ॥४।११

ननु कोयं तत्त्वधीसाध्यः पुरुषार्थः, परमानन्दस्वरूपाच्छादकाखिलानर्थनिदानाज्ञानानिवृत्तिवेति चेत् सा तर्हि निवृत्तिः सती वा स्यादसती वा सदसद्रूपा वा अनिर्वचनीया वा स्यात् । नाद्यद्वितीयौ सत्त्वेऽसत्त्वे च ब्रह्मवत् खपुष्पवच्च साध्यत्वायोगात्, अनिर्वचनीयाज्ञाने सत्त्वस्यासत्त्वस्याभावे न तत्प्रतियोगिकनिवृत्तौ तदसम्भवाच्च, न तृतीयः सदसदात्मकत्वस्यैकत्र विरोधेनासम्भवात् पूर्वोक्तदोषपरिहाराच्च, न चतुर्थः, अज्ञानातिरिक्तानिर्वचनीयस्याज्ञानाधीनसत्ताकतयाऽज्ञानस्थितिं विना तन्निवृत्तेरनिर्वचनीयत्वायोगात्, स्थितौ च तन्निवृत्तिव्याघात्, तस्मादज्ञाननिवृत्तेरेवानिरूपणात्तस्यास्तत्त्वधीफलत्वं दुर्घटमित्याशङ्क्योक्तपक्षचतुष्टयातिरिक्तपक्षान्तरे स्वीकारान्नैवमित्याह—

सदसत्सदसद्विकल्पित-
प्रतिपक्षैकवपुर्निवर्त्तनम् ॥
तमसोऽभ्युपगम्यतेऽन्यथा
नुपपत्त्यापतनैकहेतुतः ॥४।१२

पञ्चमप्रकारायामप्यविद्यानिवृत्तावनुपपत्तेः प्रतिभासात्सोऽपि पक्षो हेय इत्याशङ्क्य किं सदसदादिपक्षचतुष्टयनिबन्धनानुपपत्तय एव पञ्चमप्रकारायां तस्यां भासन्त इत्युच्यते किं वाऽन्या अनुपपत्तये इति विकल्प्याद्यं निराकरोति—

सदसत्सदसद्विकल्पित-
प्रतिबद्धा न भवन्ति वर्णिते ॥
परमात्मतमो निवर्त्तनेऽ-
नुपपत्तिप्रतिभासवृत्तयः ॥४।१३

ननु पञ्चमप्रकाराप्यविद्यानिवृत्तिरात्मनो भिन्ना चेत् द्वैतापत्तिः, अभिन्ना चेत्तस्या आत्ममात्रत्वे तस्यानादित्वात्तत्वज्ञानवैयर्थ्यापत्तिः । आत्मनस्तन्मात्रत्वे च तत्त्वज्ञानात्प्रागात्मनोभाव प्रसङ्गेन निराश्रयाऽविद्यानुपपत्तौ तन्निवृत्तेरप्यनुपपत्तेः । भेदाभेदौ विरोधादेवानुपपन्नौ । नापि

भेदाभेदाभ्यामनिर्वचनीया सा, अविद्यां विना तदनुपपत्तेर्दर्शितत्वात् । तस्मात्मपञ्चमप्रकारायामपि तस्यामन्या अनुपपत्तयः सन्तीति द्वितीय-कल्पमाशङ्क्यान्नापि पञ्चमप्रकाराङ्गीराद्भेदादिपक्षचतुष्टयनिबन्धना अनु-पपत्तयोऽपि निरवकाशा इत्याह–

चितिभेदमभेदमेव वा
द्वयरूपत्वमथो मृषात्मताम् ॥
परिहृत्य तमोनिवर्त्तनं
प्रथयन्ते खलु मुक्तिकोविदाः ॥४।१४

अविद्याधिष्ठानभूतात्मैव तन्निवृत्तिः, कल्पितानामधिष्ठानातिरिक्ता-भावानिरूपणात्, ततश्च सा सद्रूपैवेति सिद्धान्तरहस्यमाह–

अथवा चितिरेव केवला
वचनोत्पादितबुद्धिवर्त्मना ॥
परमात्मतमो निवृत्तिगी-
र्विषयत्वं समुपैत्युपाधिना ॥४।१५

ननु शुक्तिकादौ यथाऽधिष्ठानातिरिक्तस्तमोनिवृत्तिशब्दार्थस्तथात्म-न्यपि किन्न स्यादित्याशङ्क्य दृष्टान्तासंप्रतिपत्त्या परिहरति–

शुक्तिकाविषयबुद्धिजन्मना
प्रत्यगात्मचितिरेव केवला ॥
शुक्तिकागततमोनिवृत्तिरि-
त्युच्यते हृतिहरिः पशुर्यथा ॥४।१६

दृष्टान्तं विवृणोति–

वाचको हरणकर्त्तुरिष्यते
शब्द एष हि दृतेर्मनीषिभिः ॥
केवलं तु पशुता निमित्ततां
बाह्यतः स्थितवती व्रजेदियम् ॥४।१७

दृतिहरिः पशुर्यथेति यत्र दृष्टान्त उक्तस्तं दार्ष्टान्तिकं प्रपञ्चति–

एवमेव तु तमोनिवृत्तिगीः
शुक्तिकाविषयबुद्धिजन्मना ॥
बाह्यतः स्थितवतैव हेतुना
प्रत्यगात्मचिति वर्त्ततेऽञ्जसा ॥४।१८

एवं शुक्त्यादावज्ञाननिवृत्तेरधिष्ठानचिन्मात्ररूपत्वेऽपि तत्र तन्निवृत्तिव्यवहारो दृतिहरिदृष्टान्तेन शुक्त्यादिगोचरप्रमोपाधिकस्तदनन्तरमेव तत्र भवतीत्युपपाद्य तददृष्टान्तेन संसारमूलात्मतत्त्वाज्ञाननिवृत्तिरधिष्ठानचिन्मात्ररूपा तत्प्रमितिरूपोपाधिमपेक्ष्य तद्व्यवहारविषयो भवति न प्रागित्याह–

उत्पन्नशुक्तिमतिरात्मचितिर्यथैव
शुक्तेस्तमोहतिरिति प्रतिपन्नमेवम् ॥
आत्मापि जातनिजबुद्धिरबोधहानि-
रुच्येत केवलचिदेकरसो न पूर्वम् ॥४।१९

पशुताया दृतिहरिशब्दप्रयोगोपाधित्वे युक्तिं वक्ष्यतीत्यवादिष्म तामिदानीमाह–

दृतिहरणकरत्वं पुंसि चान्यत्र चेदं
दृतिहरिरिति लोके नोच्यते वर्त्तमानम् ॥
अनधिकविकलं सत् कथ्यते तत् पशुस्थं
दृतिहरिरिति शिष्टैर्बाह्यहेतोः पशुत्वात् ॥४।२०

ननु प्रत्यगभिन्नपरमात्मरूपाऽविद्यानिवृत्तेरेकत्वादन्यत्र तद्वाचकशब्दाप्रसक्तेस्तन्नियमाय तत्त्वज्ञानरूपोपाधिवर्णनं वृथेत्याशङ्क्य विद्योदयात्प्रागात्मनि तद्व्यवहाराभावात्तदुपपादनायोक्तोपाधिवर्णनमर्थवदित्याशयेनाह–

अयमपि परमात्मा प्रत्यगात्मस्वभावो
वचनजनितबुद्धेः प्राक् स्वरूपे स्थितोऽपि ।

न खलु विषयभावं ध्वान्तविच्छेदवाचो
व्रजति हि तदुपाधेर्बुद्धिवृत्तेरभावात् ॥४।२१

नन्वज्ञानदाहे ज्ञाननाशोऽज्ञाननिवृत्तिरित्यादिशब्देषु दाहादिपदानामभाववाचत्वात्कथं तेषां भावरूपे चिदात्मनि प्रवृत्तिरित्याशङ्क्याभाववाचकस्यापि पदस्यान्येन समस्तस्यावयवार्थं विहाय लक्षणया ब्रह्मण्यधर्मादिपदवद्भावरूपचिदात्मनि प्रवृत्तिसंभवात्तत्रापि तत्त्वबोधात्प्राक् तद्व्यवहाराभावात्तदुदयं तटस्थमुपाधिमपेक्ष्याज्ञानदाहादिशब्दाश्चिदात्मन्येव प्रवर्त्तन्ते इत्याह–

अज्ञानदाह इति नैकपदं समासात्
पूर्वोत्तरे खलु पदे पदतामुपेतः ॥
ज्ञानोदयं तटगतं समुपाददान-
स्तस्मात्तमोहतिरवोऽत्र चिति प्रवृत्तः ॥४।२२

दृतिहरिशब्दस्य समासादैकपद्यमापन्नस्य पशौ यथा रूढिस्तथाऽज्ञाननाशादिशब्दस्यापि यत्र वृत्तिस्तत्र रूढिरेव किं न स्यादित्याशङ्क्य दृष्टान्त एवासंप्रतिपन्न इति दृतिहरिशब्दस्यापि पशौ क्लृप्तावयार्थयोगादेव प्रवृत्त्युपपत्तेर्यौगिकार्थस्य मनुष्यादिसाधारणत्वेपि पशुत्वोपाधिना तत्पदप्रवृत्तेः पशावेव नियमितत्वेनातिप्रसङ्गाभावादित्यभिप्रेत्याह–

अत्राप्यसौ दृतिहरिः पशुरित्यखण्डः
शब्दो न खल्वभिमतोऽवयवार्थयोगात् ॥
धातुश्च वाचकतया हरतिः प्रसिद्धो
हीन्प्रत्ययश्च हरतेः परतः प्रसिद्धः ॥४।२३

एवं तत्त्वबोधोदयमपेक्ष्यात्मैवाविद्यातत्कार्यनिवृत्तिरित्युच्यत इत्युक्तम्, तत्र तत्त्वबोधस्य घटादिवदविद्याद्यविरोधित्वे तन्निवृत्तिव्यवहारे तदपेक्षैव न स्यातत्तस्तस्य तद्विरोधित्वं वक्तव्यम्, न चाविद्यादिप्रतियोगिकप्रतियोग्यसत्त्वापादकागन्तुध्वंसजनकत्वं विना तस्य तद्विरोधित्वमुपपद्यते, आत्मरूपाऽविद्यानिवृत्तिश्चानादिकालेऽविद्यादिना सह वर्त्त-

मानत्वान्न तदसत्त्वापादिका, तस्मादात्मातिरिक्त आगन्तुकस्तत्त्वधी-साध्योऽविद्यादिध्वंसः स्वीकर्त्तव्यः, स एव च तद्दाहादिपदाभिलप्य इति चेन्न, आगन्तुकध्वंसस्य प्रतियोग्यसत्त्वापादतायाः सत्कार्यवादिनां कुत्राप्यसंप्रतिपन्नत्वात्, तत्र को मोहः कः शोक एकत्वमनुपश्यतः, तरत्यविद्यां विततां हृदि यस्मिन्निवेशित इत्यादिवचनादद्वितीयाखण्डैकरसात्मविद्यैव साक्षादविद्यातत्कार्ययोरसत्त्वापादिकेति नागन्तुकध्वंसेन कृत्यमस्तीत्यभिप्रेत्य तथापि किं विद्या वेदान्तवाक्यादुत्पद्यमानैवाविद्यादि बाधत उतोत्पन्नेति वीक्षायां किमनेन विचारेण, उभयथापि विद्याबाधिताऽविद्यादेरनन्तरं स्थित्ययोगात् तया तदाधे यत्नान्तरानेपक्षणाच्च सर्वत्र तथा दर्शनादित्याह–

उद्यन्निरस्यति तमश्च तदुद्भवं च
वेदावसानवचनादथ चोदितः सन् ॥
ऐकात्म्यवस्तुविषयोऽनुभवोऽत एव
कञ्चित् सहायमनपेक्ष्य निवर्त्तकोऽसौ ॥४।२४

विद्याया अविद्यादिबाधे नैरपेक्ष्याबिलम्बौ विवदानर्हाविति दृष्टान्तेन स्पष्टयति–

दीपस्तमस्तिरयतीह भवन्नुत स्विद्
भूत्वा क्षणव्यवधिमात्रमपेक्ष्य नात्र ।
कश्चिद् विवादपदवीमुपयाति वादी
तद्वत् प्रतीच्यवगतौ तमसोऽपहन्त्र्याम् ॥४।२५

उद्यन्निरस्यतीत्ययमेव पक्षः साधुरित्यभिप्रेत्यात्मतत्त्वज्ञानं स्वोत्पत्त्यतिरिक्तानपक्षेमेव तदविद्याद्युपमर्दकं तत्त्वापरोक्षज्ञानत्वात् शुक्त्यादितत्त्वज्ञानवदिति ज्ञानकर्मसमुच्चयपक्षमपि प्रतिक्षिपति–

उत्पत्तिरेव हि धिया स्वफलं प्रदातु
माकाङ्क्षिता न च ततोऽपरमर्थनीयम् ॥
यत् कारकं तदिह काङ्क्षति जन्ममात्रा-
दन्यन्न धीः किमपि काङ्क्षति जन्मलब्ध्वा ॥४।२६

प्रमाणज्ञानं स्वफले स्वजन्मातिरिक्तानपेक्षमित्यत्र प्रत्यक्षलक्षणपर-जैमिनीयसूत्रस्थजन्मपदसामर्थ्यं लिङ्गमित्याह–

प्रत्यक्षसूत्र इदमेव निवेदयिष्य
न्न्यायेन जैमिनिरुवाच विदग्धबुद्धिः ॥
सत्संप्रयोग इति तत्र हि बुद्धिजन्म
शब्दस्य नान्यदिह किंचन कृत्यमस्ति ॥४।२७

उत्पत्तिमात्रेण विद्याया अविद्यातत्कार्यबाधकत्वेऽपि स्वबाधकत्वा-योगात्तस्या बाधकान्तरं वाच्यम्, तस्या अबाध्यत्वे च द्वैतापत्तेः, ततश्चानवस्थेत्याशङ्क्य स्वस्या अप्यविद्याकार्यत्वात्स्वयमेव बाधिका ततश्चाधिष्ठानचैतन्यमत्रपरिशेषान्न द्वैतापत्तिर्न वाऽनवस्थेत्यभिप्रेत्याह–

वेदान्तवाक्यजनिता मतिवृत्तिरेव-
मुत्पत्तितः सकलमेव भवार्णवाम्बु ॥
पीत्वा स्वयं च खलु शाम्यति दग्धलोह-
पीतं यथाम्बु चितिमेव तु शेषयित्वा ॥ ४।२८

एवमविद्यानिवृत्तेः पञ्चमप्रकारत्वे चिदात्ममात्रत्वे च विद्यो दयमात्राधीनत्वप्रतिपादनेन मुक्तौ ज्ञानकर्मसमुच्चयो निराकृतः, इदानीं ब्रह्म वेद ब्रह्मैव भवतीत्यादिशास्त्रसिद्धब्रह्मात्मतालक्षणमुक्तावपि चतु-र्विधक्रियाफलासम्भवात्कर्माननुप्रवेशेन समुच्चयायोग इत्यभिप्रेत्य तस्याः कूटस्थनित्यतामनुमानेन साधयति–

कूटस्थनित्यैव तु मुक्तिरेषा
विद्याफलत्वादिह यद्यदेवम् ॥
तत्तत्तथा दृष्टमशेषमेव
यथा हि शुक्त्यादिपदार्थसंवित् ॥४।२९

किञ्च प्रमाणफलभूतायाः संविदः स्वाभाविकजन्मादिविकार-साधकाभावाच्च सा कूटस्थनित्येत्याह–

जन्मादिषड्भावविकारहीना
शुक्त्यादिवस्तूपनिविष्टसंवित् ।
न प्रागभावद्यनुभूतिरस्याः
स्वतः प्रमाणादपि युज्यते हि ॥४।३०

सर्वसाक्षिभूतात्मैव संविज्जन्मादिसाधक इत्याशङ्क्य किमजामजानन्नेव तदीयजन्मादि साधयति उत जानन्, नादः, धर्म्यग्रहे तत्र धर्म्यवैशिष्ट्यग्रहायोगादित्याह–

अबुद्ध्यमानो न हि संविदं त-
त्संबन्धि किं चित् प्रतिपत्तुमीशः ॥
न बुद्ध्यमानोऽपि तथा तदा हि
न संविदेषा विषयत्वहेतोः ॥४।३१

एवं स्वसिद्धान्तसिद्धान्वयदृष्टान्तेन मुक्तेः कूटस्थनित्यत्वं प्रसाध्योक्तप्रतिज्ञाहेत्वनुवादेन व्यतिरेकदृष्टान्तेनापि तत्साधयति–

जन्या न मुक्तिर्घटते कुतश्चिद्
विद्याफलत्वादिति पूर्वहेतोः ॥
यद्यद्धि जन्यं जगति प्रसिद्धं
तत्तन्न विद्याफलमम्बरादि ॥४।३२

एवं ब्रह्मभावलक्षणमोक्षस्य कूटस्थनित्यत्वं प्रसाध्य तत्र कर्मणामनुपयोगमर्थसिद्धमपि तेनैव हेतुना साक्षात्साधयति ज्ञानकर्मसमुच्चयविघटनाय–

मोक्षस्वरूपो विफलक्रियोऽसौ
विद्याफलत्वादिह यद्यदेवम् ॥
तत्तत्तथा दृष्टमशेषमेव
यथैव रज्ज्वादितमोनिवृत्तिः ॥४।३३

ननु यस्यैत अष्टाचत्वारिंशत्संस्काराः स ब्राह्मणः सायुज्यं सालोक्यं च गच्छतीत्यादिस्मृतेः सायुज्यादिरूपमोक्षस्य कर्मफलत्वप्रतिपत्तेस्तद्-बाधितविषयत्वादुक्तानुमानमप्रमाणमित्याशङ्क्याह –

सायुज्यादि विवादगोचरपदं निःश्रेयसं नो भवेत्
कार्यत्वादिह यद्यदीदृशमदो निःश्रेयसं नेक्षितम् ॥
यद्वत् कुड्यघटादि तादृशमिदं तस्मादिदं तादृशं
युक्तं कल्पयितुं न तद्विसदृशं तादृङ् न दृष्टं यतः ॥४।३४

किञ्च कर्मसाध्या मुक्तिः कस्य चिद्भवस्योत्पत्तिरूपा किं वा कस्य चिन्नाशरूपा अनिर्वचनीयवस्तुरूपा वा, नाद्यः उत्पत्तेःप्राक् कार्यस्य सत्त्वेऽसत्त्वे वोत्पत्त्यसम्भवस्योक्तत्वादित्याशयेनाह–

सदसदुद्भवनं न विमुक्तता
सदसदुद्भवनानुपपत्तितः ॥
सदसतोर्नशनं न विमुक्तता
सदसतोर्नशनानुपपत्तितः ॥४।३५

न तृतीयः, अनिष्टत्वादनुपपन्नत्वाच्चेत्याह–

न च तमोमयजन्म विमुक्तता
न हि तदिष्टमनिष्ठतरं हि तत् ॥
न खलु कल्पितजन्म विमुक्तता
समुपगच्छति तद्वितथं यतः ॥४।३६

सतोऽसतो वा विनाशासम्भवेऽप्याविद्यकानिर्वचनीयबन्धस्यात्य-न्तिकनाशो मुक्तिरिति निरुद्धगतिकस्य शङ्कामनुवदति–

अथ तमोमयविश्वविकल्पना-
विलयनात्मकमभ्युपगम्यते ।
सकलदूषणजातविवर्जितं
तदिह मोक्षपदं न निवार्यते ॥४।३७

ननु न तत्त्वज्ञानमात्राद्बन्धनिवृत्तिः संभवति तत्त्वविदामपि शरीरादिबन्धदर्शनादित्याशङ्क्य तया विद्वान्नामरूपाद्विमुक्तः एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः परुषायणाः पुरुषं प्राप्यास्तं गच्छन्तीत्यादिशास्त्रप्रमाण्याल्लोके विद्याया अविद्यानिवृत्तौ निरपेक्षसाधनत्वाच्च तत्त्वसाक्षात्कारवतः सद्य एव विदेहकैवल्यं भवति यस्य तु देहादिबन्धो दृश्यते स न तत्त्वसाक्षात्कारवानिति निश्चीयते इत्याशयेन सद्यो मुक्तिमतं दर्शयति–

सम्यग्ज्ञानविभावसुः सकलमेवाज्ञानतत्सम्भवं
सद्यो वस्तुबलप्रवर्त्तनमरुद्व्यापारसन्दीपितः ॥
निर्लेपेन हि दन्दहीति न मनागप्यस्य रूपान्तरं
संसारस्य शिनष्टि तेन विदुषः सद्यो विमुक्तिर्ध्रुवा ॥४।३८

ननु तत्त्वविदः सद्यो विदेहकैवल्योपगमे, तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये, प्रजहाति यदा कामान्सर्वान् पार्थमनोगतान्, आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते इत्यादिजीवन्मुक्तिप्रतिपादकशास्त्रं निर्विषयं स्यादित्याशङ्क्य तस्यार्थवादतया शुकवामदेवादिमुक्तिशास्त्रवत्प्रकृष्टप्राज्ञकल्पितजीवनमुक्त्यनुवादेन ब्रह्मविद्यास्तुतिपरत्वात्र तद्विरोध इत्यभिप्रेत्याह–

जीवन्मुक्तिप्रत्ययं शास्त्रजातं
जीवन्मुक्ते कल्पिते योजनीयम् ॥
तावन्मात्रेणार्थवत्त्वोपपत्तेः
सद्यो मुक्तिः सम्यगेतस्य हेतोः ॥४।३९

जीवन्मुक्तिशास्त्रस्यार्थवादत्वेऽपि तदर्थस्य मानान्तराविरुद्धत्वेन भूतार्थवादत्वोपपत्तेस्तत्सिद्धा जीवन्मुक्तिर्न शक्यापलपितुम् । न च विद्यासामर्थ्यान्निःशेषाविद्यानिवृत्तौ तदनुपपत्तिरिति वाच्यम् । अनारब्धकार्य एव तु पूर्वे तदवधेरितिसूत्रोक्तन्यायेन विद्याया आरब्धफलकपुण्यपापनिवर्त्तकत्वायोगेन तत्स्थितिनिमित्ततया कल्पिताविद्यालेश-

वशेन विदुषोपि यावत्प्रारब्धकर्मक्षयं शरीरादिधारणोपपत्तेरिति मतान्तर माह–

यद्वा वियद्गोचरं योजनीयं
तस्याविद्यालेशवत्त्वोपपत्तेः ॥
तस्याभीष्टा निर्निमित्ता निवृत्ति-
र्यद्वा विद्यासन्ततिर्हेतुलेशम् ॥४।४०

ननु विद्यया चिदात्मनि ब्रह्मात्मनाभिव्यक्ते तत्राविद्यालेशस्याप्य-सम्भवात्कथं तदधीना जीवन्मुक्तिर्घटते, किं च कैश्चिद् विद्यागन्धस्य अन्यैरविद्याछायाया अपरैरविद्यासंस्कारस्य जीवन्मुक्तिघटकत्वमुच्यते, तद्विरोधादपि नाविद्यालेशाधीनजीवन्मुक्तिरिति तत्राह–

जीवन्मुक्तिव्यापृतेः प्रापको य-
स्तस्याविद्यालेशगन्धादिभाषाः ॥
नाविद्याया नापि भागस्य तस्या
स्तस्मिन् पक्षे दुर्घटत्वाद् विमुक्तेः ॥४।४१

ननु भाष्यकारादिभिरविद्यादेर्बाधितानुवृत्त्या जीवन्मुक्तव्यापृतिरिति क्वचित् क्वचित् कथ्यते सा किं गन्धच्छायादिपदाभिलप्यलेश-पक्षादर्थान्तरम्, नेत्याह–

गन्धच्छायालेशसंस्कारभाषा
विज्ञातव्या भाष्यकारीयतन्त्रे ॥
स्वाविद्याया बाधितायाः प्रतीतिः
पौर्वापर्येणार्थमालोच्य बुद्ध्या ॥४।४२

ननु विदुषोऽपि द्वैतदर्शने तदधीनभयशोकादिरूपबन्धस्यावश्य-कत्वात्कुतो जीवन्मुक्तिः, जीवत एव मुक्तौ वा कुतो द्वैतदर्शनमित्या-शङ्क्योभयस्यापि विद्वदनुभवसिद्धत्वादविरोध इत्याह–

जीवन्मुक्तिस्तावदस्ति प्रतीते-

द्वैतच्छाया तत्र चास्ति प्रतीतेः ॥

द्वैतच्छायारक्षणायास्ति लेश-

स्तस्मिन्नर्थे स्वानुभूतिः प्रमाणम् ॥४।४३

ननु विदुषोऽप्यज्ञानलेशश्चेदस्ति तदा पूर्ववद्ब्रह्म नास्ति न प्रकाशते चेति व्यवहारः स्यादित्याशङ्क्य तस्य पूर्वमविद्याकृतावरणप्रयुक्तत्वा-दावरकांशस्य च तत्त्वज्ञानेन नाशादनन्तरं तदयोगादहं ब्रह्मास्मीत्येव व्यवहारो युज्जते, तथापि मुक्तावस्थायामहमिदं ममेदमित्यपि व्यवहार-दर्शनात्तदुपपत्तये विक्षेपशक्तिवदविद्यालेशः स्वीकार्य इत्याह–

ब्रह्मात्मत्वं सान्तरायं पुरस्ताद्

बोधोत्पत्तौ ध्वस्तमोहान्तरायम् ॥

यद्यप्येवं द्वैतलेशानुवृत्तेः

प्रत्यक्षत्वान्मोहलेशोऽभ्युपेयः ॥४।४४

विदुषोऽप्यहमिदमित्यादिव्यवहारोपगमे तन्निमित्तपुण्यपापान्तरार-म्भसम्भवात्तदधीनदेहान्तरस्यावश्यकत्वाद्धिदेहकैवल्यानुपपत्तिरिति शङ्कां निराकुर्वन् जीवन्मुक्तिमुपसंहरति–

तस्माज्जीवन्मुक्तरूपेण विद्वा-

नारब्धानां कर्मणां भोगसिद्ध्यै ॥

स्थित्वा भोगं ध्वान्तगन्धप्रसूतं

भुक्त्वाऽत्यन्तं याति कैवल्यमन्ते ॥४।४५

वर्णितोभयविधमुक्तौ श्वेताश्वेतराणां श्रुतिं प्रमाणयति–

क्षरं प्रधानममृताक्षरं हरः

क्षरात्मानावीशते देव एकः ॥

तस्याभिध्यानाद्योजनात्तत्त्वभाद्

भूयश्चान्ते विश्वमायानिवृत्तिः ॥४।४६

ननु सूर्यद्वारेण ते विरजाः प्रयान्ति, यत्रामृतः स पुरुषो ह्यव्ययात्मा तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जना इत्यादि शास्त्राद्विदुषामप्यर्चिरादिमार्गेणोद्गतानामेव मुक्तिभाक्तत्वात्कथं जीवतो विदुषो मुक्तिरिति तत्राह–

ब्रह्मादीनामस्ति मुक्तिः श्रुतिभ्य
स्तेषामेषा नार्च्चिराद्या गतिर्वः ॥
तस्मादस्या निर्गुणब्रह्मविद्या
सम्बन्धित्वं नैषितव्यं भवद्भिः ॥ ४।४७

ननु तयोर्ध्वमायन्नमृतत्वमेतीति मुर्द्धन्यनाड़ीद्वारोर्ध्वगमनस्यामृतत्वप्राप्त्युपायत्वश्रवणान्मनुष्याणामूर्ध्वगमनं विना नामृतत्वप्राप्तिरित्याशङ्क्याह–

प्राणोत्क्राान्तिर्नास्ति मूर्द्धन्ययैषां
नाड्या तस्माद् यत्र यत्रैव विद्या
तत्रैव स्यान् मुक्तिरित्यभ्युपेयं
गत्युत्क्रान्ती तेन विद्यान्तरेषु ॥४।४८

एवमर्चिरादिमार्गानपेक्षां मुक्तेः प्रसाध्य कर्मपेक्षामपि निराकुर्वन् तस्याः केवलविद्याधीनत्वमाह–

देवादीनां नास्ति कर्माधिकारो
विद्या तेषां केवला मुक्तिहेतुः॥
पारंपर्यात् कर्मणामुक्तहेतो
र्विद्याङ्गत्वं सर्ववर्णाश्रमाणाम् ॥४।४९

केन द्वारेण पारंपर्यमिति वीक्षायामाह–

पारंपर्यं शुद्धिहेतुत्वहेतो
र्यज्ञादीनां श्रूयते स्मर्यते च ॥
साक्षादेषां मोक्षहेतुत्वमेव-
मन्विच्छन्तोप्यागमान्न प्रतीमः ॥४ ।५०

निरूपितप्रमेयजातस्य स्वकपोलकल्पितत्वाप्रामाणिकत्वशङ्काख्याति-लाभार्थमेतद्ग्रन्थकरणमिति मतिं च निराकुर्वन् प्रकरणार्थमुपसंहरति–

इति बहुश्रुतभाषितमुच्चकैः
श्रुतिशिरोवचनानुगतं महत् ॥
समुपदिष्टमिदं कृपया मया
प्रियमतीव हितं च मुमुक्षवे ॥४।५१

नन्वत्र ब्रह्मैव न निरूपितं समन्वयादेरपि निरूपितत्वादित्याशङ्क्य तन्निरूपणस्य ब्रह्मप्रमित्यर्थत्वाद् ब्रह्मैव प्राधान्येन निरूपितमित्यभिप्रेत्य तत्प्रमितेः सद्यो मुक्तिफलत्वं मुख्याधिकारिशिष्यानुभवसिद्धमिति वदन् स्वानुभवख्यापकं तद्वचनमवतारयति–

एवं समन्वयविरोधनिरासविद्या
निष्पत्तिसाधनफलानि गुरोः क्रमेण ।
विज्ञाय वेदफलमात्मनि सर्वमेव
पश्यन्नुवाच कृतकृत्यमतिः स शिष्यः ॥४।५२

तदुक्तीरेव दर्शयति षड्भिः –

विद्याविग्रहमग्रहेण पिहितं प्रत्यञ्चमुच्चैस्तरा
मुत्कृष्योत्तमपूरुषं मुनिधिया मुञ्जादिषीकामिव ॥
कोशात् कारणकार्यरूपविकृतात् पश्यामि निःसंशयं
क्वासीदस्ति भविष्यति क्वानुगतः संसारदुःखोदधिः ॥४।५३

तथापि द्वैताभासस्यासम्भावितस्यापि प्रतीतेर्जीवत एव मुक्तिरनु-भवसिद्धेत्याह–

पश्यामि चित्रमिव सर्वमिदं द्वितीयं
तिष्ठामि निष्कलचिदेकवपुष्यनन्ते ॥
आत्मानमद्वयमनन्तसुखैकरूपं
पश्यामि दग्धरशनामिव च प्रपञ्चम् ॥४।५४

नन्वद्वैतदर्शने सति कथं तद्विरुद्धद्वैतदर्शनानुवृत्तिस्तदभावे वा कथं जीवन्मुक्तिरित्याशङ्क्याद्वैतस्य वास्तवत्वेन द्वैतस्यावास्तवत्वेनानुभूयमानत्वात्र किं चिदनुपपन्नमित्याह–

अद्वैतमप्यनुभवामि करस्थबिल्व-
तुल्यं शरीरमहिनिर्ल्वियनीव वीक्षे ॥
एवं च जीवनमिव प्रतिभासमानं
निःश्रेयसोऽधिगमनं च मम प्रसिद्धम् ॥४।५५

विद्यामहिम्ना मदपकारकं निर्मूलमेवोच्छिन्नमिति तां प्रशंसति–

अद्वैतबाधकमभून् मम यद् द्वितीय-
मद्वैतमस्य बत बाधकमेव जातम् ।
मोहाद् द्वितीयमपबाधकमस्य विद्या
सामर्थ्यतोऽद्वयनिबर्हणमद्वितीयम् ॥४।५६

निर्मुक्तमात्मानं दृष्ट्वा पूर्वमनुभूतसंसारं स्मरन् तत्र स्वस्योत्पन्नामाश्चर्यधियं प्रकटयति–

आश्चर्यमद्य मम भाति कथं द्वितीयं
नित्ये निरस्तनिखिलाशिवचित्प्रकाशे ।
आसीत् पुरेति किमिमाः श्रुतयो न पूर्वं
येन द्वितीयमभवत्तिमिरप्रसूतम् ॥४।५७

इदानीं पूर्वश्रुतिवाक्येषु सत्स्वप्यन्वयव्यतिरेकाभ्यां तत्त्वबोधाभावे कारणं निश्चित्याज्ञानादि सम्भावन्नाश्चर्यधियं त्यजति ।

त्वत्पादपङ्कजसमाश्रयणं विना मे
सन्नप्यसन्निव परः पुरुषः पुरासीत् ॥
त्वत्पादपद्मयुगलाश्रयणादिदानीं
नासीन्न चास्ति न भविष्यति भेदबुद्धिः ॥४।५८

आत्मलाभात्परस्य लाभस्याभावात्तं प्रापितवतो गुरोस्तदनुरूप-प्रत्युपकाराभावाद्भक्तिपुरःसरं गुरूपासनमेव यावदायुर्मया कार्यम्, तावतापि तत्तोषो भवेदित्यभिप्रेत्याह–

यस्मात् कृपापरवशो मम दुश्चिकित्सं
संसाररोगमपनेतुमसि प्रवृत्तः ॥
त्वत्पादपङ्कजरजः शिरसा दधान-
स्त्वामाशरीरपतनादहमप्युपासे ॥४।५९

साधिकारिविषयप्रयोजनां स्वकृतिमुपसंहरन् तस्या मुमुक्षुभिउपा-देयतां सूचयन् तस्याः सान्वयसंज्ञामाह–

संक्षेपशारीरकमेवमेतत्
कृतं परिव्राजकमुक्तिहेतुः ।
गुरुप्रसादात् परिलभ्य तत्त्वं
त्रयीशिरस्तत्त्वनिवेदनाय ॥४।६०

तां कृतिं गङ्गासाम्येन स्तुवन् तस्या मङ्गले प्रार्थयते –

अविरलपदपङ्क्तिः पद्मनाभस्य पुण्या
चरणकमलधूलिग्राहिणी भारतीयम् ।
घनतरमुपघातं श्रेयसः श्रोतृसंघात्
सुरसरिदिव सद्यो मार्ष्टु माङ्गल्यहेतुः ॥४।६१

ग्रन्थस्य साम्प्रदायिकत्वं दर्शयितुं गुरोः स्वस्य च नाम निर्दिशन्ग्रन्थो-त्पत्तिकालं दर्शयति–

श्रीदेवेश्वरपादपङ्कजरजःसंपर्कपूताशयः
सर्वज्ञात्मगिराङ्कितो मुनिवरः संक्षेपशारीरकम् ॥
चक्रे सज्जनबुद्धिबर्द्धनमिदं राजन्यवंशे नृपे
श्रीमत्यक्षतशासने मनुकुलादित्ये भुवं शासति ॥४।६२

अन्तेऽपि भगवन्नमस्काररूपं मङ्गलमाचरति–

भुजङ्गमाङ्गशायिने विहङ्गमाङ्गगामिने ।
तुरङ्गमाङ्गभेदिने नमो रथाङ्गधारिणे ॥४।६३।

मुक्तौ तरतमं नास्ति नैव द्वैतं न वै भयम् ।
ब्रह्मैव सन् पुनर्ब्रह्म भवेज्जीवो न शंसयः ॥

इति सङ्क्षेपशारीरकसारसङ्ग्रहश्चतुर्थोऽध्यायः ।

# शुभकामना

लेखा लेखकताङ्गताफलवती निष्ठावतां त्वादृशाम् –
वैदुष्येण च तावकेन नितरां हृष्टं मनो मादृशाम् ।
आधिव्याधिजरादिभिर्विरहितं प्रारब्धजं ते वपुः –
साफल्यं तव कामये प्रतिपदं शान्तिं समासादय ॥१॥

नैरुज्यं कामये धीमन् ! भवदीयं यथोत्तरम् ।
लभतां दीर्घमायुष्यं पुत्रिणीसहितो भवान् ॥२॥

सम्पर्कं कामये शर्मन् ! भवदीयं यदा कदा ।
लभतां दीर्घमायुष्यं वैदुष्येण चमत्कृतः ॥३॥

भावत्के वदनाम्भोजे शारदा सारदायिनी ।
निर्देश्यानाम्प्रबोधाय वसतिम्परिकल्पयेत् ॥४॥

भावत्के भवने भव्ये भार्गवी भावुका सती ।
सदैश्वर्यप्रदानाय वसतिम्परिकल्पयेत् ॥५॥

चरितार्थीकृतो येन विदुष्मान् नावसीदति ।
वाग्मिने जागरूकाय साधुवादो वितीर्यते ॥६॥

पद्मपुष्पमयी माला लेखकेनैव गुम्फिता ।
मनस्विने प्रबुद्धाय रोचमाना भविष्यति ॥७॥

शुभेच्छुक–
प्रा. शुकदेव शर्मा

# शरच्चकास्ति

खोटाङ् धराधामनि जन्म यस्य,
शरत्कुमारेण कुले प्रसिद्धः ।
वासिष्ठगोत्रोद्भव भट्टराई,
यथाकुलाचारविचारनिष्ठः ॥

अधीत्य नित्यं विविधं पुरातनम्,
सनातनं ज्ञानधनं नवीनम् ।
विधाय काव्यं मधुरञ्च नैतिकं,
शरत्कुमारो बहुधा चकास्ति ॥

काव्यं हि यस्य बहुलं सरसञ्च दिव्य,
मध्यात्मसम्मतविवेकयुतञ्च रम्यम् ।
सन्देशजीवनमयं सहितं विचित्रं,
श्रीहर्षकल्पकविवर्यः शरच्चकास्ति ॥

धृत्वा प्रवीणसचिवस्य पदञ्च योग्यं,
कृत्वा त्वनेकविधकर्म च युक्तियुक्तम् ।
सेवां विधाय च विशेषमहत्वपूर्णां,
जातश्शरद्धवलचित्त यशोबलश्च ॥

शरत्कुमारोऽस्ति कुमारएव,
न वृद्धतां याति कदापि चायम् ।
नव्यानि काव्यानि तैथव तस्य,
अहो ! यथानाम हि ते वपुश्च ॥

भो ! अग्रज शुभं स्वस्थं जीवनन्ते सदा सुखम् ।
दुर्गाहं कामये नित्यं जीव त्वं शरद शतम् ॥

श्रद्धामयः शरत् काव्यपुरुषो वै विचक्षणः ।
पुण्यवान् ज्ञानवान् धन्यो मान्यो धर्मप्रियः कविः ॥

शरद्घनश्यामसलीलवक्त्रं,
सुदर्शनीयञ्च विशेषवस्त्रम् ।
शस्त्रं हि यस्य विपुलं प्रबलञ्च शास्त्रं,
धत्ते शरत्कविवरः विविधं स्वरूपम् ॥

शुभेच्छुक –
प्रा. दुर्गाप्रसाद अर्याल

# लेखकका साहित्यिक कृतिहरू

२६. उसैको लागि ( समीक्षात्मक ग्रन्थ ) – २०२६

२७. ऋतुमन्थन ( समीक्षात्मक ग्रन्थ ) – २०४४

२८. सिर्जनाका फूलहरू ( कवितासङ्ग्रह ) – २०५१

२९. बहादुर शाह ( ऐतिहासिक काव्य ) – २०५२

३०. श्रद्धाञ्जलि ( शोकात्मक काव्य ) – २०५२

३१. गीत तथा भजन – २०५२

३२. अमरसिंहको चिट्ठी, काव्य ( ऐतिहासिक काव्य ) – २०५३

३३. क्रान्तिदूत ( ऐतिहासिक काव्य ) – २०५३

३४. विविधयात्रा ( कवितासङ्ग्रह ) – २०५५

३५. यात्रैयात्रा ( यात्रात्मक कवितासङ्ग्रह ) – २०५८

३६. पत्रैपत्र ( छन्दोबद्ध पत्रात्मक कवितासङ्ग्रह ) – २०५९

३७. पृथ्वीविजय ( ऐतिहासिक काव्य ) – २०६२

३८. अनुस्मृति ( स्वलिखित जीवनगाथा ) – २०६७

३९. वन्दना ( श्रद्धाञ्जलिमय काव्यसङ्ग्रह ) – २०६८

४०. कविशतक (केही कविहरूका बारेमा ) – २०६८

४१. अष्ट्रेलियाको दैनिकी (यात्रा वृत्तान्त ) – २०६९

४२. आभास ( कवितासङ्ग्रह ) – २०७२

४३. कवितामञ्जरी ( पारिवारिककवितासङ्ग्रह ) – २०७४

# लेखकका दार्शनिक तथा आध्यात्मिक ग्रन्थहरू

१. ज्ञान र भक्ति ( समछन्दमा नेपाली भाषामा अनुवाद ) – २०६३
२. रासपञ्चाध्यायी ( समछन्दमा नेपाली भाषामा अनुवाद ) – २०६४
३. यात्रावृत्तान्त ( नेपाल र भारतका विभिन्न तीर्थहरूको यात्राविवरण ) – २०६४
४. ब्रह्मसाक्षात्कार ( अद्वैत वेदान्तपरक निबन्धग्रन्थ ) – २०६५
५. उपनिषत्सार – २०६७
६. ब्रह्मसूत्रसार – २०६७
७. मणिरत्नमाला प्रश्नोत्तरी ( समछन्दमा नेपाली भाषामा अनुवाद ) – २०६७
८. अध्यास र चतुःसूत्री ( नेपाली भाषामा अनुवाद ) – २०६८
९. वेदान्तपरिभाषासार ( नेपाली भाषामा अनुवाद ) – २०६८
१०. श्रीकृष्णाय वयन्नुमः ( समछन्दमा नेपाली भाषामा अनुवाद ) – २०६९
११. परमसत्य ( अद्वैत वेदान्तपरक निबन्धग्रन्थ ) – २०६९
१२. अध्यास ( नेपाली भाषामा अनुवाद ) – २०६९
१३. अद्वैतसिद्धिः १ खण्ड ( नेपाली भाषामा अनुवाद ) – २०६९
१४. अद्वैतसिद्धिः २ खण्ड ( नेपाली भाषामा अनुवाद ) – २०७०
१५. अन्तिम उपदेश ( समछन्दमा नेपाली भाषामा अनुवाद ) – २०७०
१६. ब्रह्मविद्या ( अद्वैत वेदान्तपरक निबन्धग्रन्थ ) – २०७०
१७. अजातवाद ( समछन्दमा नेपाली भाषामा अनुवाद ) – २०७१
१८. पराविद्या ( अद्वैत वेदान्तपरक निबन्धग्रन्थ ) – २०७१
१९. अपरोक्षाऽनुभूति ( समछन्दमा नेपाली भाषामा अनुवाद ) – २०७२
२०. औपनिषद पुरुष ( अद्वैत वेदान्तपरक निबन्धग्रन्थ ) – २०७२
२१. श्रीमद्भागवतमहापुराणको अवतरणिका ( समछन्दमा नेपाली भाषामा अनुवाद ) – २०७४
२२. अवधूतगीता ( समछन्दमा नेपाली भाषामा अनुवाद ) – २०७५
२३. अष्टावक्रगीता ( समछन्दमा नेपाली भाषामा अनुवाद ) – २०७५
२४. ऋते ज्ञानान्न मुक्तिः ( अद्वैत वेदान्तपरक निबन्धग्रन्थ ) – २०७५
२५. सङ्क्षेपशारीरकसारसङ्ग्रहः ( संस्कृत भाषामा ) – २०७५